# KAVYA-SANGRAHA.

PART II.

# काव्यसंग्रहः।

[illegible]ः खण्डः।

भा २

CALCUTTA.

PRINTED & PUBLISHED BY

BABU BHUVANA CHANDRA VASAKA

At the Sanbàda Jnànaratnàkara Press.

No. 8 Nimtollah Ghat Street.

1873.

# यन्त्रस्थित पुस्तक विवरणम् ।

| | अग्रिम मूल्य । |
|---|---|
| धातुमञ्जरी ... ... | ॥) |
| शब्दार्णवः संस्कृताभिधानः | ४) |
| सिद्धान्तकौमुदी.. ... | ५) |
| लघुकौमुदी ... ... | ॥) |
| रत्नावलि सटीक ... | १) |
| महावीरचरित " ... | १) |
| व्याकरण भूषण... ... | १) |
| कादम्बरी ... ... | २) |
| अनुमानचिन्तामणि ... | |
| अनुमानदीधिति... ... | २) |
| उणादिसूत्र ... ... | १) |
| पञ्चतन्त्र ... ... | १।) |
| प्रसन्नराघव नाटक ... | ।।।) |
| काव्यसंग्रह ... ... | २) |
| सांख्यप्रवचन भाष्य ... | २) |
| छान्दोग्य ... ... ... | ३) |
| तैत्तिरीय . ... ... | १॥) |
| वृहदारण्यक ... .. | ६) |
| मालतीमाधव ... ... | २) |
| प्रबोधचन्द्रोदय... ... | १) |
| उत्तररामचरित .. | १) |
| महानाटक ... ... | १) |
| चैतन्यचरितामृत ... | १) |
| व्रतार्क ... | २) |
| कलकिपुराण ... | १) |
| ज्योतिर्विदाभरण ... | ३) |
| वातदुत ... ... | १) |
| रामायण ... ... | ८) |
| वेदान्तसूत्र ... ... | ६) |
| हरिवंश ... ... | २) |
| हरिभक्तिविलास ... | ६) |
| विष्णुपुराण ... ... | ४) |

| | अग्रिममूल्य । |
|---|---|
| श्वेताश्वतर ... ... | २) |
| ऐतरेय ... ... ... | १॥) |
| वेतालपञ्चविंशति / वत्रिंशसिंहासन | ।।।) |
| पातञ्जलदर्शन ... ... | २) |
| आत्मतत्त्वविवेक ... ... | १) |
| प्रयोगचिन्तामणिवैद्यक | २) |
| वाभट ... ... ... | ५) |
| भैषज्यरत्नावलि ... ... | ८) |
| धन्वन्तरिनिघण्टु ... | ४) |
| माधवनिदान, ... ... | ३) |
| चरक सम्पूर्ण सटीक ... | २२) |
| भावप्रकाश ... ... ... | ६) |
| चण्डकौशिक ... ... | ।।।) |
| मनुसंहिता ... ... | ४) |
| काव्यप्रकाश सटीक ... | ४) |
| खण्डनखण्डखाद्य ... | १॥) |
| श्रीमद्भागवत ... ... | ७) |
| महाभारत ... ... | ५०) |
| भृगुसंहिता ... ... | २०० |
| महाभाष्य ... ... | |
| त्रिकाण्डशेष ... ... | |
| परिभाषा वैद्य ... ... | ॥) |
| अनर्घराघव ... ... | २) |
| सूत्र, ब्राह्मण संहिता सहित | |
| ऋग्वेद ...... / यजुर्व्वेद...... / सामवेद ...... / अथर्व्ववेद ... | ...३०० |
| मिताक्षरा ... ... | २) |
| विंशसंहिता ... ... | ६) |
| पर्व्वनैषध ... ... | ५) |

# KAVYA-SANGRAHA

PART II.

# काव्यसंग्रहः ।

द्वितीयः खण्डः ।

CALCUTTA;

PRINTED & PUBLISHED BY
BABU BHUVANA CHANDRA VASAKA
At the Sangbáda J'hánaratnákara Press.
No, 8. Nimtollah Ghat Street.

1874.

# सूचीपत्रम्।

## द्वितीय खण्डे।



इति काव्यसंग्रहः।

---

द्वितीय खण्डः ।

---

# सूर्य्यशतकम् ।

## रश्मिवर्णनम् ।

जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं
रक्ताः सक्तैरिवौघैरुदयगिरितटीधातुधाराद्रवस्य ।
आयान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्यै
भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥१॥

भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोडलीनां
लक्ष्मीमाकष्टुंकामा इव कमलवनोद्घाटनं कुर्वते ये ।
कालाकारान्धकाराननपतितजगत्साध्यसध्वंसकल्याः
कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य ॥२॥

गर्भेष्वम्भोरुहाणां शिखरिषु च शिताग्रेषु तुल्यं पतन्तः
प्रारम्भे वासरस्य व्युपरतिसमये चैकरूपास्तथैव ।
निष्पर्यायं प्रवृत्तास्त्रिभुवनभवनप्राङ्गणे पान्तु युष्मान्
ऊष्माणं सन्तताध्वश्रमजमिव भृशं बिभ्रतो ब्रध्नपादाः ॥३

प्रभ्रस्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन्प्राग्
जन्तूंस्तन्तून् यथा यानतनु वितनुते तिग्मरोचिर्मरीचीन्

ते सान्द्रीभूय सद्यः क्रमविशददशाशादशालीविशालं
शश्वत्सम्पादयन्तोऽम्बरममलमलं मङ्गलं वो दिशन्तु॥

न्यक्कुर्वन्नोषधीशे मुषितरुचिशुचेवौषधीः प्रोषिताभा
भास्वद्ग्रावोद्गतेन प्रथममिव कृताभ्युद्गतिः पावकेन।
पक्षच्छेदव्रणासृक्स्रुत इव दृषदो दर्शयन् प्रातरद्रेर्
आताम्रस्तीव्रभानोरनभिमतनुदे स्ताद्गभस्त्युद्गमो वः॥५

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेर्
दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम्॥६

बिभ्राणा वामनत्वं प्रथममथ तथैवांशवः प्रांशवो वः
क्रान्ताकाशान्तरालास्तदनु दशदिशः पूरयन्तस्ततोऽपि।
ध्वान्तादाच्छिद्य देवद्विष इव बलितो विश्वमाश्वश्नुवानाः
कृच्छ्राण्युच्छ्रायहेलावहसितहरयो हारिदश्वा हरन्तु॥

उद्गाढेनारुणिम्ना विदधति बहुलं येऽरुणस्यारुणत्वं
मूर्द्धोद्धूतौ खलीनक्षतरुधिररुचो ये रथाश्वाननेषु।
शैलानां शेखरत्वं श्रितशिखरिशिखास्तन्वते ये दिशन्तु
प्रेङ्खन्तः खे खरांशोः खचितदिनमुखास्ते मयूखाः सुखं वः॥

दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु॥

बन्धध्वंसैकहेतुं शिरसि नतिरसावद्धसन्ध्याञ्जलीनां
लोकानां ये प्रबोधं विदधति विपुलाम्भोजषण्डाशयेव।
ते युष्माकं स्वचित्तप्रविशदविशदप्रार्थनाकल्पवृक्षाः
कल्पन्तां निर्विकल्पं दिनकरकिरणाः केतवः कल्मषस्य॥

धारा रायोऽधनायापदि सपदि करालम्बभूताः प्रपाते
तत्त्वालोकैकदीपास्त्रिदिवपतिपुरप्रस्थितौ वीथ्य एव।
निर्वाणोद्योगियोगिप्रगमनिजतनुद्वारि वेत्रायमाणा
स्त्रायन्तां तीव्रभानोर्दिवसमुखसुखा रश्मयः कल्मषाद्वः॥

प्राचिप्रागाचरन्त्योऽनतिचिरमचले चारुचूडामणित्वं
मुञ्चन्त्योरोचनाम्बुप्रचुरमिव दिशामुच्चकैश्चर्चनाय॥
चाटूत्कैश्चक्रनाम्नां चतुरमविचलैर्लोचनैरर्च्यमानाश्
चेष्टन्तांचिन्तितानामुचितमचरमाश्चण्डरोचीरुचोवः

एकंज्योतिर्दृशौद्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भिर्
भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि
युष्माकंतानिसप्तत्रिदशमुनिनुतान्यष्टदिग्भाञ्जिभानोर्
यान्ति प्राह्णे नवत्वं दशदधतु शिवंदीधितीनां शतानि।

आवृत्तिभ्रान्तविश्वाः श्रममिवदधतः शोषिणः स्वोष्मणेव
ग्रीष्मे दावाग्नितप्ता इव रसमसकृद्ये धरित्र्या धयन्ति
ते प्रावृष्यात्तपानातिशयरुज इवोद्वान्ततोया हिमर्त्तौ
मार्त्तण्डस्य प्रचण्डाश्चिरमशुभभिदेऽभीषवो वो भवन्तु॥

तन्वाना दिग्वधूनां समधिकमधुरालोकरम्यामवस्था
मारुढप्रौढ़िलेखोत्कलितकपिशिमालङ्कृतिः केवलैव।

उज्जृम्भाम्भोजनेत्रद्युतिनिदिनमुखे किञ्चिदुद्भिद्यमाना
श्मश्रुश्रेणीवतासां दिशतु दशशती शर्मघर्मत्विषो वः ॥

मौलीन्दोर्मैषमोषीद्द्युतिमिति वृषभाङ्केन यः शङ्किनेव
प्रत्यग्रोद्घाटिताम्भोरुहकुहरगुहासुस्थितेनेव धात्रा ।
कृष्णेन ध्वान्तकृष्णस्वतनुपरिभवत्रस्नुनेव स्तुतोलं
त्राणायस्तात्तनीयानपितिमिररिपोः सत्विषामुद्गमोवः॥

विस्तीर्णं व्योमदीर्घाः सपदिदशदिशोव्यस्तवेलाम्भसोऽब्धीन्
कुर्वद्भिर्दृश्यमानां नगनगरगणाभोगपृथ्वीञ्च पृथ्वीं ।
पद्मिन्युच्छ्वास्यते यैरुषसि जगदपि ध्वंसयित्वातमिस्रा
मुस्राविस्रंसयन्तु द्रुतमनभिमतं ते सहस्रत्विषो वः॥

अस्तव्यस्तत्वशून्यो निजरुचिरनिशानश्वरः कर्तुमीशो
विश्वं वेश्मेव दीपः प्रतिहततिमिरं यः प्रदेशे स्थितोपि।
दिक्कालापेक्षयासौ त्रिभुवनमटतस्तिग्मभानोर्नवाख्यां
यातः शातक्रतव्यां दिशिदिशतुशिवं सोऽर्चिषामुद्गमोवः॥

मागान्म्लानिंमृणालीमृदुरितिदययेवाप्रविष्टोऽहिलोक
लोकालोकस्य पार्श्वं प्रतपति न परं यस्तदाख्यार्थमेव।
ऊर्ध्वं ब्रह्माण्डखण्डस्फुटनभयपरित्यक्तदैर्घ्योद्युसीम्नि
स्वेच्छावश्यावकाशावधिरवतु सवस्तापनोरोचिरोघः॥

अश्यामः कालएको नभवतिभुवनान्तेपि वीतेऽन्धकारे
सद्यः प्रालेयपादो न विलयमचलश्चन्द्रमास्तावुपैति।
बद्धः सिद्धाञ्जलीनां नहि कुमुदवनस्यापि यत्रोज्जिहाने
तत्प्रातः प्रेक्षणीयं दिशतुदिनपतेर्धामकामाधिकं वः॥

यत्कान्तिं पङ्कजानां नहरतिकुरुते प्रत्युताधिक्यरम्यां
नोधत्ते तारकाभां तिरयति नितरामाशु यन्नित्यमेव।
कर्तुं नालं निमेषं दिवसमपिपरं यत्तदेकं त्रिलोक्याश्
चक्षुः सामान्यचक्षुर्विसदृशमघभिद्भास्वतस्तान्महो वः॥

क्ष्मां क्षेपीयः क्षपांभःशिशिरतरजलस्पर्शतर्षादृतेव
द्रागाशानेतुमाशाद्विरदकरसरः पुष्कराणीव बोधम्।
प्रातः प्रोल्लंघ्यविष्णोः पदमपि घृणये वातिवेगाद्दवीय
सुद्दामद्योतमाना दहतु दिनपतेर्दुर्निमित्तं द्युतिर्वः॥

नोकल्पापायवायोरदयरयदलत्क्ष्माधरस्यापि गम्या
गाढ़ोद्गीर्णोज्ज्वलश्रीरहनिन रहिता नो तमःकज्जलेन
प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वो
वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः

निःशेषाशावपूरप्रवणगुरुगुणश्लाघनीयस्वरूपा
पर्याप्तं नोदयादौ दिनगमसमयोपप्लवेऽप्युन्नतेव।
अत्यन्तं यानभिज्ञा क्षणमपि तमसा साकमेकत्र वस्तुं
ब्रध्नस्येद्धा रुचिर्वो रुचिरिव रचितस्याप्तये वस्तुनोऽस्तु॥

विभ्राणः शक्तिमाशु प्रशमितबलवत्तारकौर्जित्यगुर्वीं
कुर्वाणो लीलयाधः शिखिनमपि लसच्चन्द्रकान्तावभासं।
आदध्यादन्धकारे रतिमतिशयिनीमावहन् वीक्षणानां
बालो लक्ष्मीमपारामपरइव गुहोऽहर्पतेरातपो वः॥

ज्योत्स्नांशाकर्षपाण्डुद्युतितिमिरमषीशेषकल्माषमीषज्
जृम्भोद्भूतेनपिङ्गं सरसिजरजसा सन्ध्ययाशोणशोचिः

प्रातःप्रारम्भकाले सकलमिव जगच्छिन्नमुन्मीलयन्ती
कान्तिस्तीक्ष्णत्विषोक्ष्णांमुदमुपनयतान्तूलिकेवाततांव
आयान्ती किं सुमेरोः सरणिरचितापद्मरागैःपरागैर्
आहोस्वित्त्वष्टुमाहारजनिविरचितावैजयन्तीरथस्य।
माञ्जिष्ठीपृष्ठवाहावलिविधुतशिरश्चामरालीनुलोकैर्
आशङ्क्यालोकितैवं सवितुरघनुदे स्तात्प्रभाते प्रभा वः॥
ध्वान्तध्वंसं विधत्ते न तपतिनितरां नातिरूपं व्यनक्ति
न्यक्त्वं नीत्वापिनक्तं नवितरतितरां तावदह्नस्त्विषंय.।
स प्रातर्मा व्यरंसीदसकलपटिमा पूरयन् युष्मदाशा
आशाकाशावकाशावतरणतरुणप्रक्रमोऽर्कप्रकाशः॥२८
तीव्रं निर्वाणहेतुर्यदपि च विपुलं यत् प्रकर्षेण चाथ
प्रत्यक्षं यत्परोक्षं यदिह यदपरं नश्वरं शाश्वतञ्च।
यत्सर्वस्य प्रसिद्धं जगति कतिपये योगिनो यद्विदन्ति
ज्योतिस्तद्द्विप्रकारं सवितुरवतुवोबाह्यमाभ्यन्तरञ्च॥
रत्नानां मण्डलाय प्रभवति नियते देशलब्धावकाशं
वह्नेर्दीवादिदग्धं निजजडिमतया कर्तुमानन्दमिन्दोः
यत्तु त्रैलोक्यभूषाविधिरघदहनं ह्लादिवृष्ट्याशु तद्वो
बाहुल्योत्पाद्यकार्याधिकतरमवतादेकमेवार्कतेजः॥३०
मीलच्चक्षुर्विजिह्वश्रुतिजडरसनं विघ्नितघ्राणवृत्ति
स्वव्यापाराक्षमत्वक् परिमुषितमनःश्वासमात्रावशेषं।
विस्रस्ताङ्गं पतित्वा स्वपदपहरतादश्रियं वोऽर्कजन्मा
कालव्यालावलीढं जगदगदइवोत्थापयन् प्राक्प्रतापः

निःशेषं नैशमम्भः प्रसभमपनुदन्नश्रुलेशानुकारि
स्तोकस्तोकापनीतारुणरुचिरचिरादस्तदोषानुषङ्गः ।
दाता दृष्टिं प्रसन्नां त्रिभुवननयनस्याशु युष्मद्विरुद्धं
वध्यादुध्नस्य सिद्धाञ्जनविधिरपरः प्राक्तनोर्चिःप्रचारः ॥
भूत्वाजम्भस्य भेत्तुः ककुभि परिभवारम्भभूः शुभ्रभानोर्
बिभ्राणा बभ्रुभावं प्रसभमभिनवांभोजजृम्भा प्रगल्भा ।
भूषाभूरिच्छशोभात्रिभुवनभवनस्याशु वैभाकरी प्राग्
विभ्रान्तिभ्राजमाना विभवतु विभवोद्भूतये सा विभा वः
संसक्तं सिक्तमूलादभिनवभुवनोद्यानकौतूहलिन्या
यामिन्या कन्ययेवामृतकरकलशावर्जितेनामृतेन ।
अर्कालोकः क्रियाद्वो मुदमुदयशिरश्चक्रवालालवालाद्
उद्यन्बालप्रवालप्रतिमरुचिरहः पादपप्राक्प्रवालः ॥ ३४
भिन्नं भासारुणस्य क्वचिदभिनवया विद्रुमाणां त्विषेव
भिन्नं नक्षत्ररत्नद्युतिनिकरकरालान्तरालं क्वचिच्च ।
अन्तर्निःशेषकृष्णप्रियमुदधिमिव ध्वान्तराशिं पिबंस्ता
दौर्वः पूर्वोऽप्यपूर्वोऽग्निरिव भवदघप्लुष्टयेऽर्कावभासः ॥ ३५
गन्धर्वैर्गद्यपद्यव्यतिकरितवचो हृद्यमातोद्यवाद्यैर्
यो देवो नारदाद्यैर्मुनिभिरभिनुतो वेदवेद्यैर्विभिद्य ।
आसाद्यापाद्यते यं पुनरपि च जगद्यौवनं सद्य उद्यन्
उद्योतोद्योतितद्यौर्द्युतु दिवसकृतोऽसाववद्यानि वोऽद्य ॥
आवानैश्चन्द्रकान्तैश्च्युततिमिरतया भानवान्तारकाणाम्
एणाङ्कालोकलोपादुपहतमहसामोषधीनां लयेन ।

आरादुत्प्रेक्ष्यमाणाक्षणमुदयतटांतर्हितस्याहिमांशोर्
आभाप्राभातकीवोऽवतुनतुनितरां तावदाविर्भवंती॥ ३७
सानौ सा नौदयेनारुणितनलपुनर्यैर्विनानां वनानाम्
आलीमालीढपूर्वा परिहृतकुहरोपान्तनिम्नातनिम्ना।
भावोभावोपशान्तिं दिशतु दिनपतेर्भासमाना समाना
राजी राजीवरेणोः समसमयमुदेतीवयस्या वयस्या॥
उज्जृम्भाम्भोरुहाणां प्रभवतिपयसां याश्रिये नोष्णतायै
पुष्णात्यालोकमात्रं ननु दिशतिदृशां दृश्यमाना विघातं।
पूर्वाद्रेरेवपूर्वन्दिवमनु च पुनः पावनी दिङ्मुखानाम्
एनांस्येनीविभासौनुदतुनुतिपदैकास्पदं प्राक्तनीवः॥ ३८
वाचां वाचस्पतेरप्यचलभिदुचिता चार्यकाणां प्रपंचैर्
वैरिंच्यानां तथोच्चारितरुचिरऋचामाननानां चतुर्णां
उच्चेतान्नीसु वाच्यच्युतिशुचिचरितं यस्यनोच्चैर्विविच्य
प्राच्यं वर्चश्चकासच्चिरमुपचिनुतात्तस्य चण्डार्चिषोवः॥
मूर्ध्न्यद्रेर्धातुरागस्तरुषु किशलयो विद्रुमौघः समुद्रे
दिङ्मातङ्गोत्तमाङ्गेष्वभिनवनिहितः सान्द्रसिन्दूररेणुः।
सीम्नि व्योम्नश्च हेम्नः सुरशिखरिभुवो जायतेयः प्रकाशः
शोणिम्नाऽसौ खरांशोरुषसि दिशतु वः शर्मशोभैकदेशः।
अस्ताद्रीशोत्तमाङ्गेश्रितशशिनितमः कालकूटे निपीते
याति व्यक्तिं पुरस्तानरुणकिशलये प्रत्युषः पारिजाते।
उद्यंत्यारक्तपीताम्बरविशदतरोद्वीक्षिता तीक्ष्णभानोर्
लक्ष्मीर्लक्ष्मीरिवास्तु स्फुटकमलपुटापाश्रया श्रेयसेवः॥

नोदन्वाञ्जन्मभूमिर्घ्नतदुदरभुवो बान्धवाः कौस्तुभाद्या
यस्याः पाणौ न पद्मं नच नरकरिपूरःस्थली वासवेश्म।
तेजोरूपा परैव त्रिषु भुवनतटेष्वादधाना व्यवस्थां
सा श्रीः श्रेयांसि दिश्यादशिशिरमहसो मण्डलाग्रोद्गता वः

अश्ववर्णना।

रत्नानां मण्डनाय प्रभवति नियतोद्देशलब्धावकाशं
पातङ्गापङ्कवत्त्वाजितपवनजवा वाजिनस्ते जगन्ति।
येषां वीतान्यचिह्नोन्वयमपि वहतां मार्गमाख्याति मेरु॥
वुद्यन्नुद्दामदीप्तिद्युमणिमणिशिलावेदिकाजातवेदाः॥४४

प्लुष्टाः पुष्टेंऽशुपातैरतिनिकटतया दत्तदाहातिरेकैर्
एकाहाक्रान्तकृत्स्नत्रिदिवपथपृथुश्वासशोषाः श्रमेण।
तीव्रोदन्यास्त्वरन्तामहितविहतये सप्तयः सप्तसप्ते
रभ्यासाकाशगङ्गाजलधरलगलावर्जिताग्राननाः वः॥४५

मत्वाऽन्यान्पार्श्वतोऽश्वान्स्फटिकतटदृषद्दृष्टदेहान्द्रवन्त
व्यस्तोऽहन्यस्तसन्ध्ये यमिति मृदुपदा पद्मरागोपलेषु।
सादृश्याद्दश्यमूर्तिर्मरकतकटके क्लिष्टसूता सुमेरोर्
मूर्द्ध्न्यावृत्तिवश्यध्रुवगतिरवतु ब्रध्नवाहावली वः॥४६॥

हेलालोलं वहन्ती विषधरदमनस्याग्रजेनावकृष्टां
स्वर्वाहिन्याः सुदूरं जनितजवभयाः स्यन्दनस्य स्वदेन।
निर्व्याजं तायमाने हरितिमणिनिजे स्फीतफेनाहितश्रीर्
अश्रेयांस्यश्वपङ्क्तिः शमयतु यमुनेवापरा तापनी वः॥४७

मार्गोपान्ते सुमेरोर्नुवतिकृतनतीनाकधाम्नां निकाये
वीक्ष्य व्रीडावतीनांप्रतिकुहरमुखंकिन्नरीणांमुखानि।
हृते स्रयत्यपोषज्जडगतिबहतां कन्धराद्वैर्वहद्भिर्
वाहानांव्यस्ततादः समसमसमरद्द्वेषितं कल्मषाणि ॥
धुन्वन्तोनीरदालीर्निजरुचिहरिताःपार्श्वयोःपक्षतुल्या
स्तानूत्तानैः खलीनैःखचितमुखरुचच्योततालोहितेन।
उड्डीयेव व्रजन्तो वियतिगतिवशादर्कवाहाःक्रियासुः
क्षेमंहेमाद्रिहृद्यद्रुमशिखरशिरःश्रेणिशाखाशुकावः

## सारथिवर्णना ।

प्रातः शैलाग्रवङ्केरजनिजवनिकापायसंलक्ष्य लक्ष्मीर्
विक्षिप्यापूर्वपुष्पाञ्जलिमुडुनिकरं सूत्रधारायमाणः।
यामेष्वङ्केष्विवाहःकृतरुचिषु चतुर्ष्वेवयातः प्रतिष्ठाम
व्यात्प्रस्तावयन्वोजगदटनमहानाटिकां सूर्यसूतः॥५०॥
आक्रान्त्याबाह्यमानंपशुमिवहरिणांवाहकोऽग्रोहरीणां
आयन्तं पक्षपाताज्जगति समरुचिःसर्वकर्मैकसाक्षी।
शतं नेत्रश्रुतीनामवजयति वयोज्येष्ठभावे समेपि
स्वाम्ना धाम्नांनिधिर्यः सभवदघनुदे नूतनस्तादनूरुः ॥
दत्तार्घैर्दूरनम्रैर्वियति विनयतो वीक्षितः सिद्धसङ्घैः
सानाथ्यं सारथिर्वः सुदृशशतरुचेःसातिरेकं करोतु।
आपीय प्रातरेव प्रततहिमपयः स्यन्दनीरिन्दुभासो
यःकाष्ठादीपनोग्रे जडिनद्रवमश्वं सेवते पृष्ठतोऽर्कम् ॥

मुञ्चन्रश्मीन् दिनादौ दिनगमसमये संहरंश्च स्वतन्त्र
स्तोलप्रख्यातवीर्य्यो विरतहरिपदाक्रान्तिवद्धाभियोगः।
कालोत्कर्षाल्लघुत्वंप्रसभमधिपतौ योजयन् यो द्विजानां
सेवाप्रीतेन पूष्णा स्वसम इवकृतस्त्रायतां सोऽरुणो वः॥

शातः श्यामालतायाः परशुरिवतमोरण्यवह्नेरिवार्चिः
प्राच्यग्रे प्राग्ग्रहीतुं ग्रहकुमुदवनं प्रागुदस्तो ग्रहस्तः।
ऐक्यं भिन्दन् द्युभूम्योरवधिरिव विधातेव विश्वप्रबोधं
वाह्नानां वोविनेता व्यपनयतु विपन्नाम धामाधिपस्य॥

पौरस्त्यस्तोयदर्त्तोः पवनइव पतन् पावकस्येव धूमो
विश्वस्येवादिसर्गः प्रणवइव परं पावनं वेदराशेः।
सन्ध्यानृत्योत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः
सौरस्याग्रे सुखंवोवितरतु विनतानन्दनःस्यन्दनस्य॥

पर्य्याप्तं तप्तचामीकरकटकतटीश्लिष्टशीतेतरांशा
वासीदत् स्यन्दनाश्वानुकृतिमरकते पद्मरागायमाणः
यःसोत्कर्षां विभूषांकुरुतइव कुलक्ष्माभृदीशस्य मेरोर्
एनांस्यह्नाय दूरं शमयतु स गुरुः काद्रवेयद्विषो वः॥

नीत्वाश्वान् सप्तकक्षाइव नियमवशं वेत्रकल्पप्रतोद
स्तूर्णं ध्वान्तस्यराशावितरजनइवोत्सारिते दूरभाजि।
पूर्वं प्रष्ठो रथस्य क्षितिभृदधिपतीन् दर्शयंस्त्रायतां व
स्त्रैलोक्यास्थानदानोद्यतदिवसपतेःप्राक्प्रतीहारपालः

वज्रिन्जातंविकाशीक्षणकमलवनं भासिनो भासि वह्ने
तातं नत्वाश्वपार्श्वान्निय यम हिषं राक्षसा वीक्षिताःस्थ।

सप्तीन् सिञ्च प्रचेतः पवन भज जवं वित्तपावेदितस्त्वं
वन्देशश्वेतिजल्पन्प्रतिदिशमधिपान्पातुपूष्णोग्रणीर्वः॥
पाशानाशान्तपालाद्वरुण वरुणतो मा गृहीः प्रगृहाण
त्वष्णांकृष्णास्यचक्रे जहिहिहिनर्हिरथो यातिमेनैकचक्रः
योक्तुं युग्मं किमुच्चैःश्रवसमभिलषस्यष्टमं त्वलशालोस्
त्यक्तान्यापेक्षविश्वोपकृतिरितिरविःशास्तियंसोऽताद्वः॥
नोमूर्च्छा छिन्नवाञ्छः श्रमविवशवपुर्नैवमप्यास्य शोषी
पान्थः पथ्येतराणि क्षपयतु भवतां भास्वतोऽग्रेसरः सः।
यःसंश्रित्यत्रिलोकीमटति पटुतरैः स्थाप्यमानो मयूखैर्
आरामदामलेखामिवहरितमणिश्यामलामश्वपंक्तिं॥
घोदन्तोत्तीर्णमज्जज्जडखुरमुपलाः सैकतेनाकनद्याः
स्कन्दन्तःकन्दरालीःकनकशिखरिणोमेखलासुस्खलन्तः
दूरं दूर्वास्थलोत्का मरकतदृषदिस्वादुरा यत्र याताः
पूष्णोश्वाः पूरयंस्तैस्तदवतु जवनैर्हुंकृतेनाग्रगोवः॥ ६१॥
प्रीनोरःप्रेरिताश्वैश्चरमखुरपुटप्रस्थितैः प्रातरद्रा
वादीर्घाङ्घ्रोरुदस्तोहरिभिरुपगतासङ्गनिःशब्दचक्रः
उत्तानानूरुमूर्द्धावनतिहठभवद्विप्रतीपप्रणामः
प्राह्णे श्रेयोविधत्तांसवितुरवतरन् व्योमवीथीरथोवः॥
उत्कीर्णस्वर्णरेणुद्रुतखुरदलितापार्श्वयोः शश्वदश्वैर्
अश्रान्तभ्रान्तचक्रक्रमनिखिलमिलन्नेमिनिम्नामरेण
मेरोर्मूर्द्धन्यघं वो विघटयतु रवेरेकवीथी रथस्य
क्षोण्णोदस्ताम्बुरिक्ताप्रकटितपुलिनोढूपरा स्वर्धुनीवः॥

ध्वान्तौघध्वंसदीक्षाविधिगुरुवहताप्राक्सहस्रंकराणाम्
अर्यम्णा यो गरिम्णः पदमतुलमुपानीयताध्यासनेन ।
सश्रान्तानां नितान्तं भरमिव मरुतामक्षणांविघोटुं
स्कन्धात्स्कन्धंव्रजन्वोऽष्टजिनविहतयेभास्वतःस्यन्दनोऽस्तु॥

योक्त्रीभूतान्युगस्य ग्रसितुमिव पुरोदन्दशूकान्दधानो
द्वेधाव्यस्ताम्बुवाहावलिविहितवृहत्पक्षविक्षेपशोभः ।
सावित्रः स्यन्दनोऽसौ निरतिशयरयप्रीनितानूरुरेनः
क्षेपीयो वो गरुत्मानिव हरतु हरीच्छाविधेयप्रचारः॥

धूर्ध्वस्ताग्र्यग्रहाणि ध्वजपटपवनान्दोलितेन्दूनि दूरं
राहौ ग्रासाभिलाषादनुसरति पुनर्दत्तचक्रव्यथानि।
श्रान्ताश्वश्वासहेलाधुतविबुधधुनीनिर्झराम्भांसि भद्रं
देयासुर्वो दवीयो दिविदिवसपतेःस्यन्दनप्रस्थितानि॥

अक्षेरक्षां निबध्य प्रतिसववलयैर्योजयन्त्यो युगाग्रं
धूस्तम्भे दग्धधूपाः प्रतिहतसुमनो गोचरे कूवरस्य ।
चर्चाश्चक्रे ददत्यो मलयजरजसा सिद्धसाध्व्यस्त्रिसंध्यं
वन्दन्ते यं द्युमार्गे स दहतु दुरितान्यंशुमत्स्यन्दनो वः॥

नन्तुं नाकालयानामनिशमुपनताम्पद्वतिः पंक्तिरेव
क्षोदे नक्षत्रराशेरशिशरयमिलच्चक्रपिष्टस्य धूलिः ।
ह्रेषाह्लादो हरीणां सुरशिखरिदरीः पूरयन्नेमिनादो
यस्याव्यात्तीव्रभानोःसदिविभुवियथाव्यक्तचिह्नोरथोवः॥

एकाह्नैव दीर्घां त्रिभुवनपदवीं लङ्घयन् यो लघिष्ठः
पृष्ठेमेरोर्गरीयान्दलितमणिदृषत्त्वीषिपिंषन्शिरांसि।

यः सर्वस्योपरिष्टादथच पुनरधस्तादिवास्ताद्रिमूर्ध्नि
ब्रध्नस्याव्यात्स एवंदुरधिगमपरिष्पन्दनः स्यन्दनो वः ॥
निष्पन्दानां विमानावलिविततदिवां देववृन्दारकाणां
वृन्दैरानन्दसान्द्रोद्यममपि वहतां विन्दतां वन्दितुं नो।
मन्दाकिन्याममन्दः पुलिनभृति मृदुर्मन्दरे मन्दराभे
मन्दारैर्मण्डितारं दधदिहदिनकृत्स्यन्दनस्तान्मुदे वः॥
चक्रीचक्रारपंक्तिंहरिरपिचहरीन्धूर्जटिर्धूर्ध्वजाग्रान्
अक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूवराग्रं कुवेरः ।
रंहः संघः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौतिप्रीतिप्रसन्नोऽन्वहमहिमरुचेःसोऽवतात्स्यन्दनो वः॥
नेत्राहीनेन मूले विहितपरिकरः सिद्धसाध्यैर्मरुद्भिः
पादोपान्ते स्तुतोऽलं वलिहरिरभसाकर्षणाबद्धवेगः ।
भ्राम्यन्व्योमाम्बुराशावशिशिरकिरणस्यन्दनःसन्ततंवो
दिश्याल्लक्ष्मीमतुल्यामतुलितमहिमैवापरोमन्दराद्रिः ॥

मण्डलवर्णना ।

यज्ज्यायोवीजमह्नामपहृततिमिरं चक्षुषामञ्जनंयत्
यद्द्वारं मुक्तिभाजां यदखिलभुवनज्योतिषामेकमोकः।
यद्वृष्ट्यम्भोनिधानं धरणिरससुधापानपात्रं महद्यद्
दिश्यादीशस्यभासां तदविकलमलं मण्डलं मङ्गलं वः॥
वेलावृद्धिं व्युसिन्धोः पयइव खमिवाद्योतितोगृगृहोडु
डोमोद्भिन्नस्वचिह्नप्रसवमिवमधोराश्मसंस्थान् महांसि।

प्रातः पुष्णोऽशुभानि प्रशमयतु शिरःशेखरीभूतमद्रेः
पौरस्त्यस्योद्भवस्तेस्तिमिततमतमःखण्डनं मण्डलं वः ॥
प्रत्युप्तस्तप्तहेमोज्ज्वलरुचिरचलः पद्मरागेन येन
ज्यायः किञ्जल्कपुञ्जं यदलिकुलसितेरम्बरेन्दीवरस्य ।
कालव्यालस्य चिह्नं महिततममहोमूर्धिरत्नं महत्तत्
दीप्तांशोः प्रातरव्यात्तदविकलजगन्मण्डलं मङ्गलं वः ॥
कस्नाता तारकानां पतति तनुरवश्यायविन्दुर्यथेन्दु
र्विभ्राणा दृक्स्मरारेदरसिमधुरिपोः कौस्तुभानोगभस्तिः
यत्पर्य्यायेण लोकानवति च जगतां जीवितं यच्च तद्वो
वह्नेः सायह्नुतेव द्युतिरुदयगते यत्र तन्मण्डलं वो
मार्तण्डीयं पुनीयाद्दिविभुवि च तमांसीवमुष्णन्महांसि ॥
यत्प्राच्यां प्राक्चकास्तिप्रभवतिचयतः प्राच्यसावुज्जिहान ।
दिग्धं मध्ये यदह्नोभवति ततरुचा येनचोत्पाद्यतेऽह्नः ।
विश्वानुग्राहि विम्बं सृजदपि च रवेर्मण्डलं मुक्तयेस्तु ॥
शुष्यन्त्यूटान्धकारामकरवसतयोमारवीणां स्थलीनां
येनोत्तप्ताः स्फुटन्तस्तडितितिलतुलांयान्त्यगेन्द्रायुगान्ते
तच्चण्डांशोरकाण्डत्रिभुवनदहनाशङ्कया धाम कृत्स्नं
संहृत्यालोकमात्रं प्रलघुनिदधतस्तान्मुदेमण्डलं वः ॥
उद्यद्युद्यानवाप्यां बहुलततमतः पङ्कपूरं विदार्य
प्रोद्भिन्नं पत्रपार्श्वेष्वविमलमरुणच्छायया विस्फुरन्त्या ।
कल्याणानिक्रियाद्वःकमलमिवमहन्मण्डलंचण्डभानोर्
अन्वीतंटपिहेतोरसकृदलिकुलाकारिणाराहुणायत् ॥

चक्षुर्दक्षद्विषो यन्न तु दहति पुरा पूरयत्येव कामं
नास्तं युष्टं मरुद्भिर्यदिह नियमिनां यानपात्रं भवाब्धौ ।
यद्वीतश्रान्तिशश्वद्भ्रमदपि जगतां भ्रान्तिमद्भ्रान्तिहन्ति
ब्रह्मेशाद्याधिरूढक्रियमथ च हिताधायि तन्मण्डलं वः ॥
सिद्धैः सिद्धान्तमिश्रं श्रितविधिविबुधैश्चारणैश्चाटुगर्भं
गीत्या गन्धर्वमुख्यैर्मुहुरहिपतिभिर्यातुधानैर्यतात्मा ।
सार्घ्यं साध्यैर्मुनीन्द्रैर्मुदिततममनोमोक्षिभिः पक्षपातात्
प्रातः प्रारभ्यमाणस्तुतिरवतु रविर्विश्ववंद्योदयो वः ॥
भासामासन्नभावाधिकतरपटुलश्चक्रवालस्य पातात्
छेदाच्छिन्नगच्छत्तुरगखरपुटन्यासनिःशङ्कटङ्कैः ।
निःशङ्कस्यन्दनाङ्गभ्रमणनिकषणात्पातु वस्त्रिप्रकारं
तप्तांशुस्त्वष्टरीवापरइव परितः पर्यटन् हाटकाद्रिं ॥
नोशुष्कंनाकनद्याविकसितकनकाम्भोरुहाभ्राजितन्तुः
तुष्टानैवोपभोग्या भवति भृशतरं नन्दनोद्यानलक्ष्मी ।
नोशृङ्गाणि द्रुतानिद्रुतममरगिरेः कामधौतानि धौता
नीद्धं धामद्यमार्गेष्वदयति दययायःसवोव्याद्दिनोवः ॥
ध्वान्तस्यैवान्तहेतुर्नभवति मलिनैकात्मनःपाप्मनोपि
प्राक्पादोपान्तभाजां जनयति न परम्पङ्कजं नामबोधं ।
कर्ता निःश्रेयसानामपि न तु खलु यः केवलं वासराणां
सोव्याद्देकोद्यमेच्छाविरहितवज्रष्टहद्विश्वकार्य्योर्य्यभावः
लोठल्लोष्टाविचेष्टः श्रितशयनतलो निःसहीभूतदेहः
सन्देहीप्राणितव्येसपदि दशदिशः प्रेक्षमाणेऽन्धकाराः ।

निःश्वासायासनिष्ठःपरमपरवशोजायते जीवलोकः
शोकेनैवान्यलोकोभ्युदयकृतिगतेयत्रसोऽर्कोवताद्वः ॥
क्रामन्लोकोपिलोकांस्तदुपकृतिकृतावास्थितःस्थैर्यकोटीं
नृणां दृष्टिं विजिह्मां विदधदपि करोत्यन्तरत्यन्तभद्रां।
यस्तापस्यापि हेतुर्भवतिनियमिनामेकनिर्वाणदायी
भूयात्सप्रागवस्थाधिकतरपरिणामोदयोऽर्कःश्रियेवः॥
व्यापन्नर्त्तुन्नकालो व्यभिचरति फलं नौषधीर्वृष्टिरिष्टा
नेष्टैस्तुष्यन्ति देवा नहिवहतिमरुन्निर्मलाभानिभानि।
आशाःशान्तानभिन्दन्त्यवधिमुदधयोबिभ्रतिक्ष्माभृताक्ष्मां
यस्मिंस्त्रैलोक्यमेवंनचलतितपतिस्तात् ससूर्यःश्रियेवः॥
कैलासे कृत्तिवासा विहरतिविरहत्रासदेहाढकान्तः
श्रान्तःशेतेमहाह्नावभिजलधिविनाछद्मनापद्मनाभः ।
योगोद्योगैकतानो गमयति सकलं वासरं स्वं स्वयम्भू-
र्भूरित्रैलोक्यचिंताव्यतिभुवनविधौयत्रभास्वान्सवोव्यात्
एतद्यन्मण्डलं खेतपतिदिनकृतस्ताऋचोऽर्चीं षियानि
द्योतन्तेतानिसामान्ययमपिपुरुषोमण्डलेसुर्यजूंषि ।
एवं यं वेद वेदत्रितयमयमयं वेद वेदीसमग्रो
वर्गःस्वर्गापवर्गप्रकृतिरविकृतिः सोस्तुसूर्यः श्रियेवः॥
नाकौकः प्रत्यनीकक्षतिपटुमहसां वासवाग्रेसराणां
सर्वेषां साधुपातां जगदिदमदितेरात्मजत्वे समेपि ।
येनादित्याभिधानं निरतिशयगुणे नात्मनिन्यस्तमस्तु
स्तुत्यस्त्रैलोक्यवन्द्यैस्त्रिदशमुनिगणैःसोंऽशुमान्श्रेयसेवः॥

भूमिंधाम्नाभिवृष्ट्याजगतिजलमयीं पावनीं संस्मृताव
प्याग्नेयींदाहशक्तिंमुदमपियजमानात्मिकाप्रार्थितानां।
लीलामाकाश एवामृतकरघटितं ध्वान्तपक्षस्य पर्वण्य
एवं सूर्योष्टभेदो भवइव भवतः पातु बिभ्रत्स्वमूर्त्तिं॥
प्राक्कालोन्निद्रपद्माकरपरिमलनाविर्भवत्पादशोभो
भक्त्यात्यक्तोरुखेदोङ्गतिदिविविनतासूनुना नीयमानः।
सप्ताश्वाप्तापरान्तान्यधिकमधरयन्योजगन्तिस्तुतोऽलं
देवैर्दैवः सपायादपरइव मुरारातिरह्नां पतिर्वः॥९१॥
यःस्रष्टापां पुरस्ताचलवरसमभ्युन्नतेर्हेतुरेको
लोकानांयस्त्रयाणांस्थितउपरिपदे दुर्विलंघ्येन धाम्ना।
सद्यःसिद्धैःप्रसन्नद्युतिशुभचतुराशामुखत्वाद्विभक्तो
द्वेधावेधाइवाविष्कृतकमलरुचिः सोर्चिषामाकरोवः॥
साद्रिद्वीपान्नदीशान्दिशतिदशदिशोदर्शयन्प्राग्दृशोयः
सादृश्यं दृश्यते नो सदृशशतदृशि लैदृशेयस्य देशे।
दीप्तांशुर्वः स दिश्यादशिवयुगदशाद्दर्शितद्वादशात्मा
संशास्त्यर्थांश्च यस्ताश्रयविदतिशयं दन्दशूकासनाद्यः॥
तीर्थानिव्यर्थकानिह्रदनदसरसीनिर्झराम्भोजिनीनां
नोदन्वन्तो नुदन्ति प्रतिदिनममुसं शुभ्रपातानुबन्धि
श्चापोलोकापगाया अपि कलुषमुषो मज्जतां नैवयत
त्रातुं यातोऽन्यलोकान्स दिवसदिवसस्यैकहेतुर्हितं वः।
एतत्पातालपङ्कप्लुतमिव तमसा साकमुद्गाढमासी-
दप्रज्ञातप्रतर्क्यं निरवगति तथालक्षणं सुप्तमन्तः।

यादृक् सृष्टेः पुरस्तान्निशिनिशिनिखिलं जायते तादृगेव
त्रैलोक्यं यद्वियोगादवतु रविरसौ सर्व्वतुल्योदयो वः ॥
द्वीपे योऽस्ताचलोऽस्मिन्भवति खलु स एवापरत्रोदयाद्रिर्
या यामिन्युज्वलेन्दुद्युतिरिह दिवसोऽन्यत्र दीप्तातपः सः।
यद्वश्यौ देशकालाविति नियमवतो नोभयं देशकाला
वव्यात्स्वप्रभावाहितभुवनहितो हेतुरह्नामिनो वः ॥
व्यग्रैरुग्रग्रहोडुग्रसनगुरुतरैर्नैसमग्रैरुदग्रैः
प्रत्यग्रैरीषदुग्रैरुदितगिरिगतो गोगणैर्गौरयन् गां ।
उद्गाढार्चिर्विलीनामरनगर नगग्रावगर्भामिवाह्नाम्
अग्रेऽग्र्योयोविशत्ते ग्लपयतु गहनं सग्रहग्रामणीर्व्वः ॥
योनिः साम्नां विधाता मधुरिपुरजितो धूर्जटिः शङ्करो
सौमृत्युः कालोऽन्तकायाः पतिरपिधनदः पावको जातवेदाः।
इत्थं संज्ञाऽऽविश्यादिवदमृतभुजां या यदृच्छाप्रवृत्तास्ता
सामेकोऽभिधेयस्तदनुगुणगणो यः स सूर्य्योऽवताद्वः ॥
देवः किं बान्धवः स्यात्प्रियसुहृदथवाचार्य आहोस्विदार्यो
रक्षा चक्षुर्नु दीपो गुरुरुत जनको जीवितं बीजमोजः।
एवं निर्णीयते यः क इव न जगतां सर्वदा सर्वदासौ
सर्वाकारोपकारी दिशतु दशशताभीशुरव्यर्थितं वः ॥
श्लोका लोकस्य भूत्यै शतमिति रचिताः श्रीमयूरेण भक्त्या
युक्तश्चैतान् पठेद्यः सकृदपि पुरुषः सर्वपापैर्विमुक्तः।
आरोग्यं सत्कवित्वं मतिमतुलबलं कान्तिमायुः प्रकर्षं
विद्यामैश्वर्य्यमर्थं सुखमपि लभते सोऽत्र सूर्य्यप्रसादात्॥

इति महाकविश्रीमयूरभट्टकृतं सूर्य्यशतकं समाप्तम् ।

## दृष्टान्तशतकम् ।

शिवस्मरणमेवैकं संसारान्तकनाशनम् ।
घनौघो घोरदावाग्निनिर्वापणपटुर्भवेत् ॥१॥
साधुरेव प्रवीणः स्यात्सद्गुणामृतवर्णने ।
नवचूताङ्कुरास्वादकुशलः कोकिलः किल ॥२॥
दुर्जनो दूषयत्येव सतां गुणगणं क्षणात् ।
नलिनी कुरुते धूमः सर्वथा विमलाम्बरम् ॥३॥
यथा दोषो विभात्यस्य जनस्य न तथा गुणः ।
प्रायः कलङ्कएवेन्दोः प्रस्फुटो न प्रसन्नता ॥४॥
विवेकएव व्यसनं पुंसां क्षपयितुं क्षमः ।
अपहर्त्तुं समर्थोऽसौ रविरेव निशातमः ॥५॥
प्रायः सदुपदेशार्हा धीमन्तो न जडाशयाः ।
तिलाः कुसुमसौगन्ध्यवाहिनो न यवाः क्वचित् ॥६॥
चिन्त्यते नयएवादावमन्दं समुपेप्सुभिः ।
विनम्य पूर्वं सिंहोपि हन्ति हस्तिनमोजसा ॥७॥
संस्थितस्य गुणोत्कर्षः प्रायः प्रस्फुरतिस्फुटम् ।
दग्धस्यागरुखण्डस्य स्फारी भवति सौरभम् ॥८॥
मनस्विहृदयं धत्ते दोषेणैव प्रसन्नताम् ।
भस्मना ज्वलदङ्गारः प्रसादं लभतेतराम् ॥९॥

उत्तमः क्लेशविक्षोभं क्षमः सोढुं नहीतरः ।
मणिरेव महाशाणघर्षणं नतु मृत्कणः ॥१०॥
स्वजातीयं विना वैरी न जय्यः स्यात्कदाचन ।
विना वज्रमणिं मुक्तामणिर्भेद्यः कथं भवेत् ॥११॥
सज्जना एव साधूनां प्रथयन्ति गुणोत्करम् ।
पुष्पाणां सौरभं प्रायस्तनुते दिक्षु मारुतः ॥१२॥
उपकर्त्तुं यथा स्वल्पः समर्थो नतथा महान् ।
प्रायः कूपस्तृषां हन्ति सततं नतु वारिधिः ॥१३॥
सति शीले गुणा भान्ति पुंसां शौर्यादयो यथा ।
यौवने सदलङ्कारः शोभाम्बिभ्रति सुभ्रुवः ॥१४॥
जडः प्रभवति प्रायो दुःखं बिभ्रति साधवः ।
शीतांशावुदिते पद्माः सङ्कोचं यान्ति वारिणि ॥१५॥
गुणेन स्पृहणीयः स्यान्नरूपेण युतो नरः ।
सौगन्ध्यहीनं नादेयं पुष्पं कान्तमपि क्वचित् ॥१६॥
कश्चित्कस्यचिदेव स्यात् सुहृद्विस्रम्भभाजनम् ।
पद्मं विकासयत्यर्कः सङ्कोचयति कैरवम् ॥१७॥
ईश्वराः पिशुनान् शश्वद्विषन्तीति किमद्भुतम् ।
प्रायो निधय एवाहीन्द्रिजिह्वान्दधतेतराम् ॥१८॥
संपद्यास्ते परैः साकं विपदि स्वजनैर्जडः ।
जृम्भत्यम्भोरुहं भृङ्गः शुष्यत्युदकशैवलैः ॥१९॥
नीचावमानमलिनां प्रभुङ्क्ते सम्पदं पुमान् ।
लशुनाक्तां सकर्पूरचर्चां वितनुते तनौ ॥२०॥

व्यसनानन्तरं सौख्यं स्वल्पमप्यधिकं भवेत् ।
काषायरसमास्वाद्य स्वादुतीवाम्बु विन्दते ॥२१॥
गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः ।
मालतीमल्लिकामोदं घ्राणं वेत्ति न लोचनम् ॥२२॥
प्रभूतवयसः पुंसो धियः पाकः प्रवर्त्तते ।
जीर्णस्य चन्दनतरोरामोद उपजायते ॥२३॥
कामाय स्पृहयत्यात्मा संयतोऽपि मनीषिणः ।
वीथीनियमितोप्युक्षा शष्पमासाद्य धावति ॥२४॥
धनागमेऽधिकं पुंसां लोभमभ्येति मानसम् ।
निदाघकाले प्रालेयः प्रायः शैत्यं वहत्यलम् ॥२५॥
सहजोऽपि गुणः पुंसां साधुवादेन वर्धते ।
कामं सुरसलेपेन कान्तिं वहति काञ्चनम् ॥२६॥
निन्दां यः कुरुते साधोस्तथा स्वं दूषयत्यसौ ।
खे भूतिं यस्त्यजेदुच्चैर्मूर्ध्नि तस्यैव सा पतेत् ॥२७॥
स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् ।
न त्यजन्ति रुतं मञ्जु काकसम्पर्कतः पिकाः ॥२८॥
संपत्तौ कर्कशं चित्तं खलस्यापदि कोमलम् ।
शीतलं कठिनं प्रायस्तप्तं मृदु भवत्ययः ॥२९॥
प्रायः प्रकुप्यति लघुः प्रीत्यैव प्रखलो जनः ।
नयनं स्नेहसंपर्कात्कालुष्यं समुपैत्यलम् ॥३०॥
शुभं वाप्यशुभं कर्म फलकालमपेक्षते ।
शरद्येव फलत्याशु शालिर्न सुरभौ क्वचित् ॥३१॥

भोगेच्छा नोपभोगेन भोगिनां जातु शाम्यति ।
लवणेनान्तरालेन तृष्णा प्रत्युत जायते ॥३२॥
दुर्लभोप्युत्तमः प्रायः स्वजातीयेन लभ्यते ।
कर्णकोटरगं वारि वारिणैवावकृष्यते ॥३३॥
जन्तोर्निरुपभोगस्य दृश्यते भुवि रूक्षता ।
वाताशिनो द्विजिह्वत्वं विहितं पश्य वेधसा ॥३४॥
ऊर्जितं सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनः पुनः ।
कवलीकुरुते स्वस्थं विधुं दिवि विधुन्तुदः ॥३५॥
न लभन्ते विनोद्योगं जन्तवः सम्पदां पदम् ।
सुराः क्षीरोदविक्षोभमनुभूयामृतं पपुः ॥३६॥
सम्पत्तौ कोमलं चित्तं साधोरापदि कर्कशम् ।
सुकुमारं नवं पत्रं तरोः स्यात्कठिनं शुचौ ॥३७॥
आकरः कारणं जन्तोर्दौर्जन्यस्य न जायते ।
कालकूटः सुधासिन्धोः प्राणिनः प्राणहारकः ॥३८॥
गुणदोषाववाप्येते पुंसां संभोजनाद् बुधैः ।
लेभे पीयूषगरले मन्थनादम्बुधेः सुरैः ॥३९॥
स्वभावं न जहात्येव साधुरापद्गतोपि सन् ।
कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ॥४०॥
न व्याप्तिरेषा गुणिनो गुणवान् जायते ध्रुवम् ।
चन्दनोऽनलसन्दग्धो न भस्म सुरभि क्वचित् ॥४१॥
अप्यापत्समयः साधोः प्रयाति श्लाघनीयताम् ।
विधो र्विधुन्तुदास्कन्दविपत्कालोपि सुन्दरः ॥४२॥

विना परीक्षां नो तत्त्वं प्रसिद्धं ज्ञायते सतः ।
स्वर्णसत्त्वात् शुद्धिर्ज्ञायते कर्षणं विना ॥४३॥
प्राप्य वित्तं जडाः नूनं निर्वृत्तिं यान्ति नान्यथा ।
तोयमासाद्य गर्जन्ति न रिक्तास्तनयित्नवः ॥४४॥
कार्यापेक्षो जनः प्रायः प्रीतिमाविष्करोत्यलम् ।
लोभार्थी सौनिकः शष्पैर्मेषं पुष्णाति पेशलैः ॥४५॥
दुर्जनो जीयते युक्त्या निग्रहेण न धीमता ।
निपात्यते महावृक्षस्तत्समीपक्षितिक्षयात् ॥४६॥
सुखदुःखे समे स्यातां जन्तूनां क्लेशहेतुके ।
मूर्ध्नि स्थितानां केशानां भवेतां स्नेहछेदने ॥४७॥
दुष्टदुर्जनदौरात्म्यैः सज्जने रज्यते जनः ।
आरुह्य पर्वतं पान्थः सानौ निर्वृतिमेत्यलम् ॥४८॥
स्वभावसुन्दरं वस्तु न संस्कारमपेक्षते ।
मुक्तारत्नस्य शाणाश्मघर्षणं नोपयुज्यते ॥४९॥
शोभते विदुषां मध्ये नैव निर्गुणमानसः ।
अन्तरे तमसां दीपः शोभते नार्कतेजसाम् ॥५०॥
युक्त्या परोक्षं बाधेत विपक्षक्षपणक्षमः ।
शोषयत्यचिरेणैव प्रान्तरस्थमलं पयः ॥५१॥
दुर्गदेशप्रविष्टोपि शूरोऽभ्येति पराभवम् ।
गाढपङ्कनिमग्नाङ्गो मातङ्गोप्यवसीदति ॥५२॥
नयेनाङ्कुरितं शौर्यं जयाय नतु केवलम् ।
अन्ययुक्तं विषं भुक्तं पथ्यं स्यादन्यथा क्षतिः ॥५३॥

मृदुभिर्बहुभिः शूरः पुम्भिरेको न बाध्यते।
कपोतपोतकैरेकः श्येनो जातु न बाध्यते॥ ५४॥
येनात्मा पश्यतां नीतः स एवान्विष्यते जनैः।
हस्ती हेमसहस्रेण क्रीयते न मृगाधिपः॥ ५५॥
गुणो गुणान्तरापेक्षी स्वरूपख्यातिहेतवे।
स्वभावबाल्यं लावण्यं तारुण्येन मनोहरम्॥ ५६॥
सुलभं वस्तु सर्वस्य न यात्यादरणीयताम्।
स्वदारपरिहारेण परदारार्थिनो जनाः॥ ५७॥
विक्रीतं निजमात्मानं वस्त्रैः संस्कुरुते जडः।
परेभ्यः स्वशरीरस्य के वा भूषां वितन्वते॥ ५८॥
क्षणक्षयिणि सापाये भोगे रज्यन्ति नोत्तमाः।
सन्त्यज्याम्भोजकिञ्जल्कं न प्रार्थयति शैवलम्॥ ५९॥
असम्भवगुणस्तुत्या जायते स्वात्मनस्त्रपा।
कर्णिकारं सुगन्धीति वदन् केनोपहास्यते॥ ६०॥
धनाशया खलीकारः कस्य नाम न जायते।
दूरादामिषलोभेन बध्यते खेचरः खगः॥ ६१॥
तटस्थैः ख्यापितास्तेतो विशन्ति गुणिनाङ्गुणाः।
उत्कोचितानां पद्मानां गन्धो वायुभिराहृतः॥ ६२॥
निजाशयवदाभाति पुंसां चित्ते पराशयः।
प्रतिमामुखचन्द्राभे कृपाणे याति दीर्घताम्॥ ६३॥
अधमं बाधते भूयो दुःखवेगो न तूत्तमम्।
पादद्वयं व्रजत्याशु शीतस्पर्शो न चक्षुषी॥ ६४॥

गुणवान् सुचिरस्थायी देवोपि नाभिजायते।
तिष्ठत्येकान्तिशान्चन्द्रः श्रीमान् संपूर्णमण्डलः ॥ ६५॥
यतएवागतो दोषस्ततएव निवर्त्तते।
अग्निदग्धस्य विस्फोटशान्तिः स्यादग्निना ध्रुवम्॥ ६६॥
स्वधियो निश्चयो नास्ति यस्य संभ्रमते स्वयम्।
प्रवातबालपत्रस्थः पटस्तत्र निदर्शनम्॥ ६७॥
कथाप्रबन्धे बन्ध्येपि कश्चिदेवानुरज्यते।
प्रायश्चाश्चादपल्यतः सम्नन्निसकेकसम्॥ ६८॥
बुद्धिमत्त्वाभिमानः को भवेत् प्रज्ञोपजीविनाम्।
अन्यदेवैरलङ्कारैर्नाहङ्कारो विभूषणे॥ ६९॥
उत्तमोप्यधमस्य स्याद्याच् आनम्रकरः क्वचित्।
कौस्तुभादीनि रत्नानि ययाचे हरिरम्बुधिम्॥ ७०॥
प्रयत्ने समके केचिदेव स्युः फलभागिनः।
क्षीरोदमथनाद्देवैरमृतं प्रापि नासुरैः॥ ७१॥
गुणैः पूजा भवेत् पुंसां नैवंस्माज्जायते कुलात्।
चूडारत्नं शशी शम्भोः यानमुच्चैःश्रवा हरेः॥ ७२॥
भोगः परोपतापेन पुंसां दुःखाय न स्थिरः।
पानमध्यसृजः क्षिप्रं स्वपीडायै जलौकसाम्॥ ७३॥
नोपभोगपरान् अर्थान् कोपि सञ्चिनुते चिरम्।
आखवः किमलङ्कारानात्मन्याहृत्य कुर्वते॥ ७४॥
विवर्द्धचनैर्मन्युर्गूढोप्यन्तः प्रकाश्यते।
इन्धनान्तरसंसक्तैश्च ज्वलत्यग्निः पयः कणैः॥ ७५॥

निकटस्थं गरीयांसमपि लोको न मन्यते।
पवित्रामपि यन्मर्त्या न नमस्यन्ति जाह्नवीम्॥ ७६॥
स्वजनः स्वात्मवज्जन्तुर्ज्ञायते गुणवान् परैः।
गोपैर्गोपवदाज्ञायि हरिर्दैवैर्जगत्पतिः॥ ७७॥
उत्तमस्तोषमायाति तदङ्गो पोष्यते यदि।
वृक्षः प्रसीदति प्रायः पादाभ्यङ्गेन न स्वयम्॥ ७८॥
सर्वत्र गुणवानेव चकास्ति प्रथिते नरे।
मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते॥ ७९॥
उत्तमं सुचिरं नैव विपदोऽभिभवंत्यलम्।
राहुग्रसनसंभूतग्रहो विच्छाययेद्विधुम्॥ ८०॥
प्रायः स्वभावं मुञ्चन्ति सन्तः संसर्गतोऽसताम्।
चण्डांशुचण्डातपात पादा हिमांशोरमृतस्रजः॥ ८१॥
तुल्यं परोपतापित्वं कुद्वयोः साधुनीचयोः।
न दाहे ज्वलतोर्भिन्नश्चन्दनेन्धनयोः क्वचित्॥ ८२॥
न भाति वाञ्छा वैजात्ये न देवा भान्ति वादिनि।
अञ्जनं दूषणं वक्त्रे भूषणं किल लोचने॥ ८३॥
दुर्भगः स्वात्मवृत्त्या यो विभूत्यापि स तादृशः।
गोमयं श्रीनिवासोऽस्ति न तथापि मनोहरम्॥ ८४॥
गुणानर्चन्ति जन्तूनां न जातिं केवलां क्वचित्।
स्फाटिकं भाजनं भग्नं काकिन्यापि न गृह्यते॥ ८५॥
आगच्छदुत्सवो भाति यथैव न तथा गतः।
हिमांशोरुदयः सायं चकास्ति न तथोषसि॥ ८६॥

मनस्विनो न मान्यन्ते परतः प्राप्यजीवनम् ।
वलिभुग्भ्यो न नाकेभ्यः स्पृहयन्ति हि कोकिलाः ॥ ८७ ॥

सन्तोषक्षतये पुंसामाकस्मिकधनागमः ।
सरसां सेतुभेदाय वर्षौघः स च न स्थितः ॥ ८८ ॥

जीयते भूगतोप्यात्मा कालेनात्मापि स्वर्गतः ।
भवेत् श्मशानमुद्यानमुद्यानञ्च श्मशानमम् ॥ ८९ ॥

उपयोगेवरगं वस्तु शुभं स्यात्सुखकारणम् ।
उपशामयते धार्वं यथैवा घृतसंस्कृतम् ॥ ९० ॥

सन्तुष्यत्युत्तमः स्तुत्या धनेन महताधमः ।
प्रसीदन्ति जयैर्देवा बलिभिर्भूतविग्रहाः ॥ ९१ ॥

स्वजातीयविघाताय माहात्म्यं दृश्यते नृणाम् ।
श्येनो विहङ्गमानेव हिनस्ति न भुजङ्गमान् ॥ ९२ ॥

गुरुप्रयोजनोद्देशादर्चयन्ति न भक्तितः ।
दुग्धदात्रीति गौर्गेहे पोष्यते ननु धर्मतः ॥ ९३ ॥

महतां तादृशं तेजो यत्र शाम्यन्त्यनोजसः ।
अस्तं यान्ति प्रकाशेन तारका हि विवस्वतः ॥ ९४ ॥

दाता दानस्यान्तरा स्यात् पृथिव्यां
गेहे गेहे याचकानां समूहः ।
चिन्तारत्नस्यास्ति सत्त्वे विवादो
मार्गे मार्गे रेणवः सन्त्यसंख्याः ॥ ९५ ॥

चारुता अपवर्गेन पदार्थैर्धैर्येण तदनुवादिगुणत्वात् ।
वेणुगो भवति मञ्जुरसो यन्त्रगो हि सुखदः कृतशब्दः ॥ ९६ ॥

नरा: संस्कारार्हा जगति किल केचित् सुकृतिन:
समानायां जात्यामपि वयसि सत्यां परधिय: ।
अयं दृष्टान्तोऽत्र स्फुटकरणतोऽप्यभ्यसनत:
शुक: श्लोकान् वक्तुं प्रभवति न काक: क्वचिदपि ॥९७॥

धनमपि परदत्तं दु:खमौचित्यभाजां
भवति हृदि तदेवानन्दकारीतरेषाम् ।
मलयजरसबिन्दुर्बाधते न प्रसन्नं
नयति च रसवाहादेवमत्यन्तमत्र ॥ ९८ ॥

कालक्रमेण परिणामवशादनव्या-
भावा भवन्ति खलु पूर्वमतीवतुच्छा: ।
मुक्तामणिर्जलदतोयकणोऽप्यणियान्
संपद्यते च चिरकीषकरंध्रमध्ये ॥ ९९ ॥

इयं कुसुमदेवेन कविनैकेन निर्मिता ।
दृष्टान्तकलिका नाम जृम्भतां कविमानसे ॥ १०० ॥

इति कुसुमदेवरचितं दृष्टान्तशतकं सम्पूर्णम् ॥



## चौरपञ्चाशिका।

अद्यापि तां कनकचम्पकदामगौरीं
फुल्लारविन्दवदनां तनुलोमराजीम्।
सुप्तोत्थितां मदनविह्वललालसाङ्गीं
विद्यां प्रमादगणितामिव चिन्तयामि ॥ १ ॥

अद्यापि तां शशिमुखीं नवयौवनाढ्यां
पीनस्तनीं पुनरहं यदि गौरकान्तीम्।
पश्यामि मन्मथशरानलपीडितानि
गात्राणि सम्प्रति करोमि सुशीतलानि ॥ २ ॥

अद्यापि तां यदि पुनः कमलायताक्षीं
पश्यामि पीवरपयोधरभारखिन्नाम्।
सम्पीड्य बाहुयुगलेन पिबामि वक्त्रम्
उन्मत्तवन्मधुकरः कमलं यथेष्टम् ॥ ३ ॥

अद्यापि तां निधुवनक्लमनिःसहाङ्गीम्
आपाण्डुगण्डपतितालककुन्तलाक्षीम्।
प्रच्छन्नपापकृतमन्तरमावहन्तीं
कण्ठावसक्तमृदुबाहुलतां स्मरामि ॥ ४ ॥

अद्यापि तां सुरतजागरघूर्णमानां
तिर्य्यक्स्खलत्तरलतारकमावहन्तीम्।

शृङ्गारसारकमलाकरराजहंसीं
व्रीडावनम्रवदनामुरसि स्मरामि ॥ ५ ॥
अद्यापि तां सुरतताण्डवसूत्रधारीं
पूर्णेन्दुसुन्दरमुखीं मदविह्वलाङ्गीम्।
तन्वीं विशालजघनां स्तनभारखिन्नां
व्यालोलकुन्तलकलापवतीं स्मरामि॥ ६ ॥
अद्यापि तां मसृणचन्दनचर्चिताङ्गीं
कस्तूरिकापरिमलेन विसर्पिगन्धाम्।
अर्धेन्दुरेखपरिशोभितभालरेखां
मुग्धाभिरामनयनां शयने स्मरामि ॥ ७ ॥
अद्यापि तां निधुवने मधुपानपात्रीं
लोढाम्बरां कृशतनं चपलायताक्षीम्।
काश्मीरपङ्कमृगनाभिकृताङ्गरागां
कर्पूरपूगपरिपूर्णमुखीं स्मरामि ॥ ८ ॥
अद्यापि तां श्रमभवत्मदिरापराग
प्रस्वेदबिन्दुविततं वदनं प्रियायाः।
अन्ते स्मरामि रतिखेदविलोलनेत्रं
राहूपरागपरिमुक्तमिवेन्दुबिम्बम् ॥ ९ ॥
अद्यापि तन्मुखशशी परिवर्त्तते मे
रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या।
जीवेति मङ्गलवचः परिहृत्य कोपात्
कर्णे कृतं कनकपत्रमनालपन्त्या ॥ १० ॥ ११ ॥

अद्यापि तत्प्रणयभङ्गुरदृष्टिपातं
तस्याः स्मरामि रतिविभ्रमगात्रभङ्गम् ।
वस्त्राञ्चलेन परिधर्षिपयोधरान्तं
दन्तच्छदं दशनखण्डनमण्डलञ्च ॥ १२ ॥

अद्याप्यशोकनवपल्लवरक्तहस्तां
मुक्ताफलप्रचयचुम्बितचूचुकाग्राम् ।
अन्तःस्मितोच्छ्वसितापाण्डुरगण्डदेशां
तां वल्लभां रहसि सम्वलितां स्मरामि ॥ १३ ॥

अद्यापि तत् कुसुमरेणुसुगन्धिमिश्रं
न्यस्तं स्मरामि नखरक्षतलक्ष्म तस्याः ।
आकृष्टहेमरुचिराम्बरमुत्थिताया
लज्जावशात् करधृतं नकुतोब्रजन्त्याः ॥ १४ ॥

अद्यापि तां विधृतकज्जललोचनेत्रां
पृथ्वी प्रभिन्नकुसुमाकुलकेशपाशाम् ।
सिन्दूरसम्वलितमौक्तिकहारभारां
आवद्धहेमकटिकां रहसि स्मरामि ॥ १५ ॥

अद्यापि तां धवलवेश्मनि रत्नदीप
मालामयूखपटलैर्गलितान्धकारैः ।
सुप्ताञ्च मे रहसि हास्यमुखीं प्रसन्नां
लज्जाभरार्द्रनयनां परिचिन्तयामि ॥ १६ ॥

अद्यापि तां गलितबन्धनकेशपाशां
स्नस्तस्रजं स्मितसुधामधुराधरोष्ठीम् ।

पीनोन्नतस्तनयुगोपरिचारुचुम्बन्
मुक्तावलिं रहसि लोलदृशं स्मरामि ॥१७॥
अद्याप्यहं विरहवह्निनिपीडिताङ्गीं
तन्वीं कुरङ्गनयनां सुरतैकपात्रीम्।
नानाविचित्रकृतमण्डनमावहन्तीं
तां राजहंसगमनां सुदतीं स्मरामि ॥१८॥
अद्यापि तां विरहितां कुचभारनम्रां
मुक्ताकलापविमलीकृतकण्ठदेशाम्।
तां केलिमन्दिरगतां कुसुमायुधस्य
कान्तां स्मरामि रुचिरोज्ज्वलधूमकेतुम् ॥१९॥
अद्यापि चाटुशतप्रोल्लसितस्मितन्तु
तस्याः स्मरामि सुरतक्लमविह्वलायाः।
अव्याजनिस्वनितकातरकाकुकण्ठ
सङ्कीर्णवर्णरुचिरं वदनं प्रियायाः ॥२०॥
अद्यापि तां सुरतघूर्णनिमीलिताक्षीं
स्रस्ताङ्गयष्टिगलितांशुककेशनम्राम्।
शृङ्गारवारिकमलाम्बुजराजहंसीं
जन्मान्तरे निधुवनेष्वनुचिन्तयामि ॥२१॥
अद्यापि तां प्रणयिनीं मृगशावकाक्षीं
पीयूषपूर्णकुचकुम्भयुगं वहन्तीम्।
पश्याम्यहं यदि पुनर्दिवसावसाने
स्वर्गापवर्गनरराज्यसुखं त्यजामि ॥२२॥

अद्यापि तां स्तिमितवस्त्रमिवावलग्नां
प्रौढ़प्रतापमदनानलतप्तदेहाम् ।
बालां मदेकशरणामनुकम्पनीयां
प्राणाधिकां क्षणमहं नहि विस्मरामि ॥२३॥

अद्यापि तां क्षितितले वरकामिनीनां
सर्वाङ्गसुन्दरतया प्रथमैकरेखाम् ।
संसारनाटकरसोत्तमरत्नपात्रीं
कान्तां स्मरामि कुसुमायुधबाणखिन्नाम् ॥२४॥

अद्यापि तां प्रथमतो वरसुन्दरीं मे
स्नेहैकपात्रघटितावनिनाथपुत्रीम् ।
हे हे जना मम वियोगहुताशतापं
सोढुं न शक्यत इति प्रतिचिन्तयामि ॥२५॥

अद्यापि विस्मयकरी त्रिदशान् विहाय
बुद्धिर्बलाच्चलति तत् किमहङ्करोमि ।
जानन्नपि प्रतिमुहूर्त्तमिवान्तकाले
कष्टा तु वल्लभतरेति ममातिधीराः ॥२६॥

अद्यापि तां गमनमित्युदितं मदीयं
श्रुत्वैव भीतहरिणीशिशुचञ्चलाक्षीम् ।
वाचस्खलद्विगलदश्रुकणाकुलाक्षीं
सञ्चिन्तयामि गुरुशोकविनम्रवक्त्राम् ॥२७॥

अद्यापि वासगृहतो मयि नीयमाने
दुर्वारभीषणकरैर्यमदूतकल्पैः ।

किं किं तया बहुविधं न कृतं मदर्थे
कर्त्तुं न पार्य्यत इति व्यथते मनो मे ॥२८॥
अद्यापि तां क्षणवियोगवियोगमग्नां
शङ्के पुनर्बहुतया हतशोकधाराम् ।
मज्जीवधारणकरीं मदनालसाङ्गीं
किं ब्रह्मकेशवहरैः सुदतीं स्मरामि ॥२९॥
अद्यापि तां चलचकोरविलोलनेत्रां
शीतांशुमण्डलमुखीं कुटिलाग्रकेशाम् ।
मत्तेभकुम्भसदृशस्तनभारनम्रां
बन्धूकपुष्पसदृशोष्ठपुटां स्मरामि ॥३०॥
अद्यापि मे निशि दिवा हृदयं दुनोति
पूर्णेन्दुसुन्दरमुखं मम वल्लभायाः ।
लावण्यनिर्ज्जितमनोहरकामदर्पं
भूयः पुनः प्रतिमुहुर्न विलोक्यते यत् ॥३१॥
अद्यापि तामरहितां मनसापि नित्यं
सञ्चिन्तयामि सततं मम जीवितेशाम् ।
लावण्यभोगनवयौवनभारसारां
जन्मान्तरेपि मम सैव गतिर्यथा स्यात् ॥३२॥
अद्यापि तां मलयपङ्कजगन्धलुब्ध
भ्राम्यद्द्विरेफचयचुम्बितगण्डदेशाम् ।
केशावधूतकरपल्लवकङ्कनानां
त्वां नो दुनोति नियतं स्मरतं मदीयम् ॥३३॥

अद्यापि सा नखपदं स्तनमण्डलेषु
दत्तं मयैव मधुपानविमोहितेन ।
उद्भिन्नरोमपुलकै र्बहुभिः समन्तात्
जागर्त्ति रक्षति विलोकयति प्रयत्नात् ॥३४॥

अद्यापि या शशिमुखी न कृतागसं मां
सोच्चै र्वचः प्रति ददाति यदैव नक्तम् ।
चुम्बामि रोदिमि भृशं पतितोस्मि पादे
दासस्तव प्रियतमे भज मां स्मरामि ॥३५॥

अद्यापि धावति मनः किमहङ्करोमि
सार्द्धं सखीभिरभिवासगृहेषु कान्ते ।
कान्तासुगीतपरिहासविचित्रवाद्यैः
क्रीडासुखैरिह तु यातु मदीयकालः ॥३६॥

अद्यापि तां न खलु वेद्मि किमीशपत्नी
सा वा शची सुरपतेरथ कृष्णलक्ष्मीः ।
धात्रैव किं त्रिजगतां परिमोहनाय
सृष्टा कुले युवतिराजिदिदृक्षयेव ॥३७॥

अद्यापि तां जगति वर्णयितुं न कोपि
शक्नोत्यदृष्टसदृशप्रतिरूपलक्ष्मीम् ॥
दृष्टं तया तु सदृशं खलु तेन रूपं
शक्तो भवेदपि स एव परो नचान्यः ॥३८॥

अद्यापि निर्म्मलशरच्छशिगौरकान्तिं
चेतो मुनेरपि हरेत् किमुतास्मदीयम् ।

वक्त्रं सुधामयमहं यदि तत् प्रपद्ये
चुम्बामि चाप्यविरतं व्यथते न चेतः ॥३९॥

अद्यापि ते प्रतिमुहुः प्रतिभाव्यमाना
चेतो हरन्ति हरिणीशिशुलोचनायाः ।
अन्तर्निमग्नमधुपाकुलकुन्दवृन्द
सन्दर्भसुन्दररुचो नयनार्द्धपाताः ॥४०॥

अद्यापि तत्कमलरेणुसुगन्धिगन्धं
तत्प्रेमवारिमकरध्वजतापहारि ।
प्राप्नोम्यहं यदि पुनः सुरतैकतीर्थं
प्राणांस्त्यजामि नियतं पुनराप्तिहेतोः ॥४१॥

अद्यापि सा यदि पुनर्नलिनीवनान्ते
रोमाञ्चवीचिविलसच्चपलाङ्गयष्टिः ।
कादम्बकेशररुचः कणमात्रभङ्गात्
किञ्चित्क्रमं श्लथयति प्रियराजहंसी ॥४२॥

अद्यापि तां नृपतिशेखरराजकन्यां
सम्पूर्णयौवनमदालसभङ्गगात्रीम् ।
गन्धर्व्वयक्षसुरकिन्नरराजकन्यां
स्वर्गादिमां निपतितामिव चिन्तयामि ॥४३॥

अद्यापि तत्सुरतकेलिनिबद्धबुद्धिं
अङ्कोपवन्धपतितोत्थितशून्यहस्ताम् ।
दन्तौष्ठपीडननखक्षतरक्तसिक्तां
तस्याः स्मरामि रतिबन्धुरगात्रयष्टिम् ॥४४॥

अद्यापि तां निजवपुःकृतवेदिमध्यां
तत्सङ्गसम्भितसुधास्तनभारनम्राम् ।
नानाविचित्रकृतमण्डनमण्डिताङ्गीं
सुप्तोत्थितां निशि दिवा नहि विस्मरामि ॥ ४५ ॥

अद्यापि तां नववधूसुरताभियोगे
सम्पूर्णकेलिविधिना रचितां कदाचित् ।
पूर्णेन्दुसुन्दरमुखीं हरिणायताक्षीं
उन्निद्रकोकनदपत्रनखीं स्मरामि ॥ ४६ ॥

अद्यापि तद्विकसिताम्बुजगौरमध्यं
गोरोचनातिलकरुन्दकृतैकदेशम् ।
ईषन्मदालसविघूर्णितदृष्टिपातं
कान्ता मुखं सखि मया सह गच्छतीव ॥ ४७ ॥

अद्याप्यहं नवबधूसुरताभियोगं
शक्नोमि नान्यविधिना रचितुं कदाचित् ।
तद्भ्रातरो मरणमेव हि दुःखशान्त्यै
विज्ञापयामि भवतस्त्वरितं सुनीतम् ॥ ४८ ॥

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्त्ति धरणीं खलु पृष्ठकेन ।
अम्भोनिधिर्वहति दुःसहवाडवाग्निम्
अङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ ४९ ॥

इति महाकविसुन्दरकृतं विद्याया
रूपगुणवर्णनं समाप्तम् ।

## पूर्व्वचातकाष्टकम् ।

वातैर्विधूनय विभाषय भीमनादैः
सञ्चूर्णय त्वमथवा करकाभिघातैः ।
त्वद्वारिबिन्दुपरिपालितजीवितस्य
नान्या गति र्भवति वारिद चातकस्य ॥१॥

चातकस्त्रिचतुरान् पयः कणान्
याचते जलधरं पिपासितः ।
सोऽपि पूरयति भूयसाम्भसा
चित्रमत्र महता मुदारता ॥२॥

शक्यते येन केनापि जीवनेनैव जीवितुम् ।
किन्तु कौलव्रतोल्लङ्घप्रसङ्गः परदुःसहः ॥३॥

गर्ज्जसि मेघ न यच्छसि तोयं
चातकपक्षी व्याकुलितोहम् ।
दैवादिह यदि दक्षिणवातः
क्व त्वं क्वाहं क्व च जलपातः ॥४॥

वापी स्वल्पजलाशयो विषमयो नीचापगाहो ह्रदः
क्षुद्रात्क्षुद्रतरो महाजलनिधिर्गण्डूषमेकं मुनेः ।
गङ्गाद्याः सरितःपयोनिधिगताःसन्त्यज्य तस्मादिमान्
सन्मानी खलु चातको जलमुचामुच्चैः पयोवाञ्छति॥५॥

वीजैरङ्कुरितं नदीभिरुदितं वल्लीभिरुज्जृम्भितं
वृक्षैःपल्लवितं जनैश्च मुदितं धाराधरे वर्षति ।
भ्रातश्चातक पातकं किमपि ते सम्यङ्न जानीमहे
यत्तेस्मिन्न पतन्ति चञ्चुपुटके द्वित्राः पयोविन्दवः ॥६॥
नदीभ्योपि ह्रदेभ्योपि पिवन्त्यन्येऽवयःपयः ।
चातकस्य तु जीमूत भवानेवावलम्बनम् ॥७॥
नभसि निरवलम्बे सीदता दीर्घकालं
त्वदभिमुखनिविष्टोत्तानचञ्चूपुटेन ।
जलधरजलधारा दूरतस्तावदास्तां
ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन ॥८॥

इति पूर्वचातकाष्टकं समाप्तम् ।



अथ उत्तरचातकाष्टकम् ।

स्वच्छाः सौम्यजलाशयाः प्रतिदिनं ते सन्तु मा सन्तु वा
स्वल्पं वा बहु वा जलं जलधर त्वं देहि मा देहि वा॥१॥
कासारेषु सरित्सु सिन्धुषु तथा नीचेषु नीरग्रहं
धिक् तत्रापि शिरोनतिः किमपरं हेयं भवेन्मानिनाम्
इत्यालोच्य विमुच्य चातकयुवा तेषु स्पृहामादराद्
उद्ग्रीवस्तव वारिवाह कुरुते धाराधरालोकनम्॥२॥
के वा न सन्ति भुवि तामरसावतंसा
हंसावलीवलयिनो जलसन्निवेशाः ।

किं चातकः फलमवेक्ष्य समग्रपातां
पौरन्दरीमुपगतो नववारिधाराम् ॥ ३ ॥

रे धाराधर धीरनीरनिकरैरेषा रसा नीरसा
शोषा पूपकरोत्करैरतिखरैरापूरि भूरि त्वया ।
एकान्तेन भवन्तमन्तरगतं स्वान्तेन सञ्चिन्तयन्
आश्चर्यं परिपीडितोऽभिरमते यच्चातकस्तृष्णया ॥४॥

आत्मानमम्भोनिधिरेतु शोषं
ब्रह्माण्डमासिञ्चतु वा तरङ्गैः ।
नास्ति क्षतिर्नोपचितिः कदापि
पयोदवृत्तेः खलु चातकस्य ॥ ५ ॥

पयोद हे वारि ददासि वा नवा
त्वदेकचित्तः पुनरेष चातकः ।
वरं महत्या म्रियते पिपासया
तथापि नान्यस्य करोत्युपासनाम् ॥ ६ ॥

यद्यपि चातकपक्षी क्षपयति जलधरमकालवेलायां ।
तदपि न कुप्यति जलदे गतिरिह नान्या यतस्तस्य॥ ७॥

एकएव खगमानी चिरं जीवतु चातकः ।
पिपासया वा म्रियते याचते वा पुरन्दरान् ॥ ८ ॥

इत्युत्तरचातकाष्टकं समाप्तम् ॥

# भ्रमराष्टकम् ।



गन्धाढ्यासौ भुवनविदिता केतकी स्वर्णवर्णा
पद्मभ्रान्त्या क्षुधितमधुपः पुष्पमध्ये पपात ।
अन्धीभूतः कुसुमरजसा कण्टकैश्छिन्नपक्षः
स्थातुं गन्तुं द्वयमपि सखे नैव शक्तो द्विरेफः ॥१॥
गन्धाढ्यां नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूथिकां
दैवात्तां च विहाय चम्पकवनं पश्चात्सरोजं गतः ।
बद्धस्तत्र निशाकरेण विधिना क्रन्दत्यसौ मूढधीः
सन्तोषेण विना पराभवपदं प्राप्नोति मूढो जनः ॥२॥
येऽमी ते मुकुलोद्गमादनुदिनं त्वामाश्रिताः षट्पद
स्ते भ्राम्यन्ति फलाद्बहिर्वहिरतो दृष्ट्वा न सम्भाषसे ।
ये कीटास्तव दृक्पथं च न गतास्ते त्वत्फलाभ्यन्तरे
धिक् त्वां चूतयतः परापरपरिज्ञानानभिज्ञो भवान् ॥३॥
नीतं जन्म नवीननीरजवने पीतं मधु स्वेच्छया
मालत्या कुसुमेषु येन सततं केली कृता हेलया ।
तेनेयं मधुगन्धलुब्धमनसा गुञ्जालतां सेव्यते
हा धिग्दैवकृतं स एव मधुपः काङ्क्षां दशां नागतः ॥
पलाशकुसुमभ्रान्त्या शुकतुण्डे मधुव्रतः ।
पतत्येष शुकोऽप्येनं जम्बुभ्रान्त्या जिघांसति ॥५॥

दृष्ट्वा स्फीतो भवदलिरसौ लेख्यपद्मं विशालं
चित्रं चित्रं किमिति किमिति व्याहरन् निष्पपात ।
नास्मिन् गन्धो नच मधुकणा नास्ति तस्यौकुमार्य्यं
घूर्णन्मूर्धा वत नतशिरा व्रीडया निर्जगाम ॥६॥
अलिरसौ नलिनीवनवल्लभः
कुमुदिनीकुलकेलिकलारसः ।
विधिवशेन विदेशमुपागतः
कुटजपुष्परसं बहु मन्यते ॥७॥
रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पद्मजालम् ।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥८॥

इति भ्रमराष्टकं समाप्तम् ॥

वानर्य्यष्टकम् ।

माधुर्य्यं शास्त्रमारोग्यं दानं मखो द्विजातिकः ।
वैद्यं सुजीर्णं इत्यञ्च वानर्य्युक्तमिहाष्टकम् ॥
माधुर्य्यं प्रमदाजनेषु ललितं दाक्षिण्यमार्य्यजने
शौर्य्यं शत्रुषु नम्रता गुरुजने धर्मिष्ठता साधुषु ।

मर्म्मज्ञेष्वनुवर्त्तनं बहुविधं मानं जने पण्डिते
शाठ्यं पापिजने नरस्य कथिताः पर्यन्तमष्टौ गुणाः ॥१॥
शास्त्रं सुचिन्तितमपि प्रतिचिन्तनीयं
स्वाराधितोपि नृपतिः परिशङ्कनीयः ।
अङ्के स्थितापि युवतिः परिरक्षणीया
शास्त्रे नृपे च युवतौ च कुतो वशित्वम् ॥२॥
आरोग्यमानृण्यमविप्रवासः
सम्प्रत्यया वृत्तिरभीतिवासः ।
सद्भिर्मनुष्यैः सह संप्रयोगः
षड् जीवलोकेषु सुखानि राजन् ॥३॥
दानं दरिद्रे विभवेऽपि शान्तिर्
यूनां तपो ज्ञानवताञ्च मौनम् ।
इच्छानिवृत्तिश्च सुखोचितानां
दया च भूते त्रिदिवं नयन्ति ॥४॥
मूर्खो द्विजातिः स्थविरो गृहस्थो
गृही दरिद्रो धनवांस्तपस्वी ।
वेश्या कुरूपा नृपति कुधर्मी
लोके षडेतानि विडम्बितानि ॥५॥
वैद्यं पानरतं नटं कुपठितं स्वाध्यायहीनं द्विजं
युद्धे कापुरुषं हयं गतरयं मूर्खं परिव्राजकम् ।
राजानाञ्च कुमन्त्रिभिः परिवृतं देशञ्च सोपद्रवं
भार्य्यां यौवनगर्विता पररतां मुञ्चन्ति शीघ्रं बुधाः ।

सुजीर्णमन्नं सुविचक्षणः सुतः
सुशासिता स्त्री नृपतिः सुसेवितः ।
सुचिन्त्य चोक्तं सुविचार्य्य यत्कृतं
सुदीर्घकालेपि न याति विक्रियाम् ॥ ७॥
वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः ।
पुष्पं पर्य्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः ।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टश्रियं मन्त्रिणः
सर्वः कार्यवशाज्जनोभिरमते कस्यास्ति को वल्लभः॥८॥

इति वानर्य्यष्टकं समाप्तम् ।

---

## वानराष्टकम् ।

ईर्षी दक्षः क्रतौ रूपं स्तब्धःशुष्केन्धनं जवः ।
दूर्मन्त्रिणमिति स्लोकाः कथिता वानराष्टके ॥
ईर्षी घृणीत्वसन्तुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते दुःखभागिनः ॥१॥
दक्षः श्रियमधिगच्छति पथ्याशी कल्यतां सुखमरोगी
उद्युक्तो विद्यां तथा धर्मार्थयशांसि विनीतः ॥२॥
क्रतौ विवाहे व्यसने विपुक्षये
यशस्करे कर्मणि मित्रसंग्रहे ।
प्रियासु नारीषु तथैव बान्धवे
व्यतिव्ययो नास्ति नराधिपाष्टसु ॥३॥

रूपं जरा सर्व्वसुखानि तृष्णा
खलेषु सेवा पुरुषाभिमानम् ।
याञ्चा गुरुत्वं गुणमात्मपूजा
चिन्ता बलं हन्त्यदया च लक्ष्मीम् ॥४॥

स्तब्धस्य नश्यति यशो विषमस्य मैत्री
नष्टक्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥५॥

शुष्केन्धने वह्निरुपैति वृद्धिं
बालेषु शोकश्च खलेषु कोपः ।
कान्तासु कामो निपुणेषु चित्तं
धर्मो दयावत्सु महत्सु धैर्य्यम् ॥६॥

क्षमा हि सक्तेः परमं विभूषणं
तपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य विद्यैव मुनेरपि क्षमा
पराक्रमः शस्त्रबलोपजीविनाम् ॥७॥

दुर्मन्त्रिणं कमुपयाति न नीतिदोषाः
सन्तापयन्ति कमपथ्यभुजं न रोगाः ।
कं स्त्री न मोहयति कं न निहन्ति मृत्युः
कं स्त्रीकृता न विषयाः परितापयन्ति ॥८॥

इति वानराष्टकं समाप्तम् ॥

## आनन्दलहरी ।

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
नचेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरिञ्च्यादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥१॥
तनीयांसं पांशुं तव चरणपङ्केरुहभवं
विरिञ्चिः सञ्चिन्वन् विरचयति लोकानविकलम् ।
वहत्येनं शौरिः कथमपि सहस्रेण शिरसा
हरः संक्षुभ्यैनं भजति भसितोद्धूलनविधिम् ॥२॥
अविद्यानामन्तस्तिमिरमिहिरोद्दीपनकरी
जडानां चैतन्यं स्तवकमकरन्दश्रुतिशिरा ।
दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ
निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवति ॥३॥
त्वदन्यः पाणिभ्यामभयवरदो दैवतगणः
त्वमेकानैवासि प्रकटितवराभित्यभिनया ।
भयात् त्रातुं दातुं फलमपि च वाञ्छासमधिकं
शरण्ये लोकानां तव हि चरणावेवनिपुणौ ॥४॥
हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननी
पुरा नारीभूत्वा स्मररिपुमपि क्षोभमनयत् ।

स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा
मुनीनामप्यन्त प्रभवति हि मोहाय महताम् ॥५॥
धनुः पौष्पं मौर्वी मधुकरमयी पञ्चविशिखा
वसन्तः सामन्तो मलयमरुदायोधनरथः ।
तथाप्येकः सर्वं हिमगिरिसुते कामपि कृपाम्
अपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥६॥
क्वणत्काञ्चीदामा करिकरभकुम्भस्तनभरा
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥७॥
सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्य्यङ्कनिलयां
भजन्ति त्वां धन्याः कति च न चिदानन्दलहरीम् ॥८॥
महीं मूलाधारे कमपि मणिपूरे हुतवहं
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।
मनोपि भ्रूमध्ये सकलमपि भित्वा कुलपथं
सहस्रारे पद्मे सह रहसि पत्या विहरसि ॥९॥
सुधाधारासारैश्चरणयुगलान्तर्विगलितैः
प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसा ।
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि ॥१०॥

चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि
प्रभिन्नाभिः शम्भोर्नवभिरिति मूलप्रकृतिभिः ।
त्रयश्चत्वारिंशद्वसुदलकलाजत्रिवलयम्
त्रिरेखाभिः सार्द्धं तव भवनकोणाः परिणताः ॥११॥

त्वदीयं सौन्दर्यं तुहिनगिरिकन्ये तुलयितुं
कवीन्द्राः कल्पान्ते कथमपि विरिञ्चिप्रभृतयः ।
यदालोकौत्सुक्यादमरललना यान्ति सहसा
तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम् ॥१२॥

नरं वर्षीयांसं नयनविरसं नर्मसु जडं
तवापाङ्गालोके पतितमनुधावन्ति शतशः ।
गलद्वेणीबन्धाः कुचकलशविस्रस्तसिचया
हठात् त्रुट्यत्काञ्च्यो विगलितदुकूला युवतयः ॥१३॥

क्षितौ षट्पञ्चाशद्द्विसमधिकपञ्चाशदुदके
हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले ।
दिवि द्विषट् त्रिंशन्मनसि च चतुःषष्टिरिति ये
मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम् ॥१४॥

शरज्ज्योत्स्नाशुभ्रां शशियुतजटाजूटमुकुटां
वरत्रासत्राणस्फटिकगटिकापुस्तककराम् ।
सकृन्नत्वा न त्वां कथमपि सतां सन्निदधते
मधुक्षीरद्राक्षामधुरिमधुरीणा भणितयः ॥१५॥

कवीन्द्राणां चेतः कमलवनबालातपरुचिं
भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम् ॥७॥

विरिञ्चिप्रेयस्यास्तरुणतरशृङ्गारलहरीं
गभीराभिर्वाग्भिर्विदधति सभारञ्जनमयीम् ॥१६॥
सवित्रीभिर्वाचां शशिमणिशिलाभङ्गरुचिभिर्
वशिन्याद्याभिस्त्वां सह जननि सञ्चिन्तयति यः ।
स कर्त्ता काव्यानां भवति महतां भङ्गिसुभगैर्
वचोभिर्वाग्देवीवदनकमलामोदमधुरैः ॥१७॥
तनुच्छायाभिस्ते तरुणतरणिश्रीसरणिभिर्
दिवं सर्वामुर्वीमरुणमणिमग्नां स्मरति यः ।
भवन्त्यस्य त्रस्यद्वनहरिणशालीननयनाः
सहोर्वश्या वश्याः कति कति न गीर्वाणगणिकाः ॥१८॥
मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो
हरार्द्धं ध्यायेद्वरमहिषि ते मन्मथकलाम् ।
स सद्यः सङ्क्षोभं नयति वनिता इत्यति लघु
त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥१९॥
किरन्तीमङ्गेभ्यः किरणनिकुरम्बामृतरसं
हृदि त्वामाधत्ते हिमगिरिशिलामूर्त्तिमिव यः ।
स सर्पाणां दर्पं शमयति शकुन्ताधिप इव
ज्वरप्लुष्टं दृष्ट्या सुखयति सुधासारसिरया ॥२०॥
तडिल्लेखातन्वीं तपनशशिवैश्वानरमयीं
निषण्णां षण्णामप्युपरि कमलानां तव कलाम् ।
महापद्माटव्यां मृदितमलमायेन मनसा
महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ॥२१॥

भवानि त्वं दासे मयि वितर दृष्टिं सकरुणा
मिति स्तोतुं वांछन् कथयति भवानि त्वमिति यः ।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटकुमुटनीराजितपदाम् ॥२२॥
त्वया हृत्वा वामं वपुरपरितृप्तेन मनसा
शरीरार्द्धं शम्भोरपरमपि शङ्के हृतमभूत् ।
तथा हि तद्रूपं सकलमरुणाभं त्रिनयनं
कुचाभ्यामानम्रं कुटिलशशिचूडालमुकुटम् ॥२३॥
जगत् सूते धाता हरिरवति रुद्रः क्षपयति
तिरस्कुर्वन्नेतान् स्वमपि वपुरीशस्तिरयति ।
सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिव
स्तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ॥२४॥
त्रयाणां देवानां त्रिगुणजनितानामपि शिवे
भवेत् पूजा पूजा तव चरणयोर्या विरचिता ।
तथाहि त्वत्पादोद्वहनमणिपीठस्य निकटे
स्थिता ह्येते शश्वन्मुकुलितकरोत्तंसमुकुटाः ॥२५॥
विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं
विनाशं कीनाशो भजति धनदो याति निधनम् ।
वितन्द्रा माहेन्द्री विततिरपि सम्मीलति दृशां
महासंहारेऽस्मिन् विहरति सति त्वत्पतिरसौ ॥२६॥
जपो जल्पः शिल्पं सकलमपि मुद्राविरचनं
गतिः प्रादक्षिण्यभ्रमणमदनाद्याहुतिविधिः ।

प्रणामः सम्वेशः सुखमखिलमात्मार्पणदृशा
सपर्य्यापर्य्यायस्तव भवतु यन्मे विलसितम् ॥२७॥

ददाने दीनेभ्यः श्रियमनिशमात्मानुसदृशी
ममन्दं सौन्दर्य्यस्तवकमकरन्दं विकिरति।
तवास्मिन्मन्दारस्तवकशुभगे यातु चरणे
निमज्जन्मज्जीवः करणचरणैः षट् चरणताम् ॥२८॥

सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरिणीं
विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः।
करालं यत् क्ष्वेडं कवलितवतः कालकलना
न शम्भोस्तन्मूलं जननी तव ताडाङ्कमहिमा ॥२९॥

किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः
कठोरे कोटिरे स्खलसि जहि जम्भारिमुकुटम्।
प्रणम्रेष्वेतेषु प्रसभमुपयातस्य भवनं
भवस्याभ्युत्थाने तव परिजनोक्तिर्विजयते ॥३०॥

चतुःषष्ट्या तन्त्रैः सकलमभिसन्धाय भुवनं
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः।
पुनस्त्वन्निर्वन्धादखिलपुरुषार्थैकघटनात्
स्वतन्त्रन्ते तन्त्रं क्षितितलमवातीतरदिदम् ॥३१॥

शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः
स्मरो हंसः शक्रस्तदनु च परामारहरयः।
अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता
भजन्ते ते वर्णास्तव जननि नामावयवताम् ॥३२॥

स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ तव मनो
निधायैके नित्ये निरवधिमहाभोगरसिकाः ।
जपन्ति त्वां चिन्तामणिगुणनिबद्धाक्षवलया
शिवाग्नौ जुह्वन्तः सुरभिघृतधाराहुतिशतैः ॥३३॥
शरीरं त्वं शम्भोः शशिमिहिरवक्षोरुहयुगं
तवात्मानं मन्ये भगवति भवात्मानमनघम् ।
अतः शेषः शेषीत्ययमुभयसाधारणतया
स्थितः सम्बन्धो वां समरसपरमानन्दपरयोः ॥३४॥
मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि
त्वमापस्त्वं भूमिस्त्वयि परिणतायां नहि परम् ।
त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा
चिदानन्दाकारं शिवयुवतिभावेन बिभृषे ॥३५॥
तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं
परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता ।
यमाराध्यन् भक्त्या रविशशिशुचीनामविषये
निरालोके लोको निवसति निजालोकभवने ॥३६॥
विशुद्धौ ते शुद्धस्फटिकविशदं व्योमजनकं
शिवं सेवे देवीमपि शिवसमानव्यसनिनीम् ।
ययोः कान्त्या यान्त्या शशिकिरणसारूप्यसरणीं
विधूतान्तर्ध्वान्ता विलसति चकोरीव जगती ॥३७॥
समुन्मीलत् सम्वित् कमलमकरन्दैकरसिकं
भजे हंसद्वन्द्वं किमपि महतां मानसचरम् ।

यदालापादष्टादशगुणितविद्यापरिणतिर्
यदादत्ते दोषाद्गुणमखिलमद्भ्यः पय इव ॥३८॥
तडित्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया
स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषं ।
तमश्श्यामं मेघं कमपि मणिपूरैकसरणिं
निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम् ॥३९॥
तव स्वाधिष्ठाने हुतवहमधिष्ठाय नियतं
तमीडे सम्वर्त्तं जननि जननीं ताञ्च समयाम् ।
यदालोके लोकान् दहति महति क्रोधकलिते
दयार्द्रा ते दृष्टिः शिशिरमुपचारं रचयति ॥४०॥
तवाधारे मूले सह समयया लास्यपरया
भवात्मानं वन्दे नवरसमहाताण्डवनटम् ।
उभाभ्यामेताभ्यामुभयविधिमुद्दिश्य दयया
सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ॥४१॥
गतैर्माणिक्यत्वं गगणमणिभिः सान्द्रघटितं
किरीटं ते हैमं हिमगिरिसुते कीर्त्तयति यः ।
समीपे यच्छाया स्फुरणकिरणं चन्द्रशकलं
धनुः सौनासीरं किमिदमिति वध्नाति धिषणाम् ॥४२॥
धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरदलं
घनं स्निग्धं श्लक्ष्णं चिकुरनिकुरुम्बं तव शिवे ।
यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो
वसन्त्यस्मिन् मन्ये बलमथनवाटीविटपिनाम् ॥४३॥

वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर
द्विषां वृन्दै र्वन्दीकृतमिव नवीनार्ककिरणम् ।
तनोतु क्षेमं नस्तव वदनसौन्दर्य्यलहरी
परीवाहस्रोतःसरणिरिव सीमन्तसरणिः ॥४४॥
अरालैः स्वाभाव्यादलिकलभसश्रीभिरलकैः
परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् ।
दरस्मेरे यस्मिन् दशनरुचिकिञ्जल्करुचिरे
सुगन्धौ माद्यन्ति स्मरमथनचक्षुर्मधुलिहः ॥४५॥
ललाटं लावण्यद्युतिविमलमाभाति तव यत्
द्वितीयं तन्मन्ये मुकुटशशिखण्डस्य शकलम् ।
विपर्य्यासन्यासादुभयमभिसन्धाय मिलितः
सुधालेपस्यूतिः परिणमति राकाहिमकरः ॥४६॥
भ्रुवौ भुग्ने किञ्चिद्भुवनभयभङ्गव्यसनिनि
त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणे
धनुर्मन्ये सव्येतरकरगृहीतं रतिपतिः
प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमिदम् ॥४७॥
अहः सूते ऽसव्यं तव नयनमर्कात्मकतया
त्रियामां वामं ते सृजति रजनीनायकतया ।
तृतीया ते दृष्टिर्दरदलितहेमाम्बुजरुचिः
समाधत्ते सन्ध्यां दिवसनिशयोरन्तरचरीम् ॥४८॥
विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः
कृपापारावारा किमपि मधुराभोगलतिका ।

अवन्ती ते दृष्टि र्बहुनगरविस्तारविजया
ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते ॥४९॥
कवीनां सन्दर्भस्तबकमकरन्दैकरसिकं
कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम् ।
अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरला
वसूयासंसर्गादलिकनयनं किञ्चिदरुणम् ॥५०॥
शिवे शृङ्गाराद्रीतदितरमुखे कुत्सनपरा
सरोषा गङ्गायां गिरिशनयने विस्मयवती ।
हराहिभ्यो भीता सरसिरुहसौभाग्यजननी
सखीषु स्मेरा ते मयि जननि दृष्टिः सकरुणा ॥५१॥
गते कर्णाभ्यर्णं गरुड इव पक्षाणि दधती
पुरांभेत्तुश्चित्ते प्रशमरसविद्रावणफले ।
इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके
तवाकर्णाकृष्टस्मरशरविलासङ्कलयतः ॥५२॥
विभक्तं त्रैवर्ण्यं व्यतिकरितलीलाञ्जनतया
विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते ।
पुनः स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान्
रजःसत्त्वं बिभ्रत्तमइतिगुणानां त्रयमिदम् ॥५३॥
पवित्रीकर्तुं नः पशुपतपराधीनहृदये
दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः ।
नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं
त्रयाणां तीर्थानामुपनयसि सम्भेदमनघे ॥५४॥

तवापर्णे कर्णेजपनयनपैशून्यचकिता
विलीयन्ते तोये नियतमनिमेषाः सफरिकाः ।
इयञ्च श्रीर्बद्धच्छदपुटकवाटं कुवलयं
जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥५५॥

निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती
तवेत्याहुः सन्तो धरणिधरराजन्य तनये ।
त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः
परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥५६॥

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसन्दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति नच ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥५७॥

अरालं ते पाणीयुगलमगराजन्य तनये
न केषामाधत्ते कुसुमशरकोदण्डकुतुकम् ।
तिरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलसन्
अपाङ्गव्यासङ्गो दिशति शरसन्धानधिषणाम् ॥५८॥

स्फुरद्गण्डाभोगप्रतिफलितताडङ्कयुगलं
चतुश्चक्रं शङ्के तव मुखमिदं मन्मथरथम् ।
यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं
महावीरो मारः प्रमथपतये सज्जितवते ॥५९॥

सरस्वत्याः सूक्तीरमृतलहरीकौशलभिदः
पिबन्त्याः सर्वाणि श्रवणचुलुकाभ्यामविकलम् ।

चमत्कारश्लाघाचलितशिरसः कुण्डलगणो
झणत्कारैस्तारैः प्रतिवचनमाचष्टइव ते॥६०॥
असौ नासावंशस्तुहिनगिरिवंशध्वजपटे
त्वदीयो नेदीयः फलतु फलमस्माकमुचितम्।
वहन्नन्तर्मुक्ताः शिशिरतरनिश्वासघटिताः
समृद्ध्या यस्तासां बहिरपि च मुक्तामणिधरः॥६१॥
प्रकृत्यारक्तायास्तव सुदति दन्तच्छदरुचेः
प्रवक्ष्ये सादृश्यं जनयतु कथं विद्रुमलता।
न बिम्बं तद्बिम्बप्रतिफलनलाभादरुणितं
तुलामध्यारोढुं कथमपि विलज्जेत कलया॥६२॥
स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां
चकोराणामासीदतिरसतया चञ्चुजडिमा।
अतस्ते शीतांशोरमृतलहरीरम्लरुचयः
पिबन्ति स्वच्छन्दं निशिनिशि भृशं काञ्जिकधिया॥६३॥
अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजडा
जवापुष्पच्छाया जननि तव जिह्वा विजयते।
यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी
सरस्वत्या मूर्त्तिः परिणमति माणिक्यवपुषा॥६४॥
रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभिर्
निवृत्तैश्चण्डांशुत्रिपुरहरनिर्माल्यमुखैः।
विरिञ्चीन्द्रोपेन्द्रैः शशिसकलकर्पूररुचिरा
विलक्ष्यन्ते मातस्तव वदनताम्बूलकणिकाः॥६५॥

विपंच्या गायन्ती विविधमपदानं पशुपतेस्
त्वयारब्धे वक्तुं चलितशिरसा साधुवचने।
त्वदीयै र्माधुर्य्यैरपलपिततन्त्रीकलरवां
निजां वीणां वाणी निचुलयति चोलेन निभृतम्॥६६॥
कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया
गिरीशेनोदस्तं मुहुरधरपानाकुलतया।
करग्राह्यं शम्भोर्मुखमुकुरवृन्तं गिरिसुते
कथङ्कारं ब्रूमस्तवचिबुकमौपम्यरहितम्॥६७॥
भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती
तव ग्रीवा धत्ते मुखकमलनालश्रियमियम्।
स्वतः श्वेताकालागुरुबहुलजम्बालमलिना
मृणालीलालित्यं वहति यदधो हारलतिका॥६८॥
गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे
विवाहव्यानद्धप्रगुणगुणसंख्याप्रतिभुवः।
विराजन्ते नानाविधमधुररागाकरभुवां
त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते॥६९॥
मृणालीमृद्वीनां तव भुजलतानां चतसृणां
चतुर्भिः सौन्दर्य्यं सरसिजभवः स्तौति वदनैः।
नखेभ्यः सन्त्रस्यन् प्रथममथनादन्धकरिपो-
श्चतुर्णां शीर्षाणां सममभयहस्तार्पणधिया॥७०॥
नखानामुद्योतैर्नवनलिनरागं विहसतां
कराणान्ते कान्तिं कथय कथयामः कथमुमे।

कदाचिद्वा साम्यं व्रजतु कलया हन्त कमलं
यदि कीडल्लक्ष्मीचरणतललाक्षारुणदलं ॥७१॥
समन्देवि स्कन्दद्विपवदनपीतं स्तनयुगं
तवेदं न खेदं हरतु सततं प्रस्नुतमुखम् ।
यदालोक्याशङ्काकुलितहृदयो हासजनकः
स्वकुम्भौ हेरम्बः परिस्पृशति हस्तेन झटिति ॥७२॥
अमू ते वक्षोजावमृतरसमाणिक्यकलसौ
न सन्देहस्पन्दो नगपतिपताके मनसि नः ।
पिबन्तौ तौ यस्मादविदितवधूसङ्गमरसौ
कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ ॥७३॥
वहत्यम्बस्तम्बेरमदनुजकुम्भप्रकृतिभिः
समावद्धां मुक्तामणिभिरमलां हारलतिकाम् ।
कुचाभोगो बिम्बाधररुचिभिरन्तःशबलितां
प्रतापव्यामिश्रां पुरविजयिनः कीर्त्तिमिव ते ॥७४॥
कुचौ सद्यः स्विद्यत्तटघटितकूर्पासभिदुरौ
कषन्तौ दोर्मूले कनककलसाभौ कलयता ।
भयात् त्रातुं भङ्गादुदरमविलग्नं तनुभुवा
त्रिधावद्धं देवि त्रिवलिनवलीवल्लिभिरिव ॥७५॥
तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः
पयः पारावारः परिहरति सारस्वत इव ।
दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत्
कवीनां प्रौढानामजनि कमनीयं कवयिता ॥७६॥

हरक्रोधज्वालावलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतझम्पो मनसिजः ।
समुत्तस्थौ तस्मादचलतनये धूमलतिका
जनस्तां जानिते जननि तव रोमावलिरिति ॥ ७७॥

यदेतत् कालिन्दीतनुभरतरङ्गाकृति शिवे
कृशे मध्ये किञ्चिज्झटिति तव तद्भाति सुधियाम् ।
विमर्दादन्योन्यं कुचकलसयोरन्तरगतं
तनूभूतं व्योम प्रविशदिव नाभिं कुहरिणीम् ॥ ७८॥

स्थिरोगङ्गावर्त्तस्तनमुकुलरोमावलिलता
कलावालं कुण्डं कुसुमशरतेजोहुतभुजः ।
रते लीलागारं किमपि तव नाभीति गिरिजे
बिलद्वारं सिद्धेर्गिरिश नयनानां विजयते ॥ ७९॥

निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो
नमन्मूर्त्तेर्नाभौ वलिषु शनकैस्त्रुट्यत इव ।
चिरन्ते मध्यस्य त्रुटिततटिनीतीरतरुणा
समावस्था स्थेम्नो भवतु कुशलं शैलतनये ॥ ८०॥

गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजात्
नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे ।
अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं
नितम्बप्राग्भारः स्थगयति लघुत्वं नयति च ॥ ८१॥

करीन्द्राणां शुण्डाकनककदलीकाण्डपटलीम्
उभाभ्यामूरुभ्यामुभयमपि निर्ज्जित्य भवती ।

सुवृत्ताभ्यां पत्यौ प्रणतिकठिनाभ्यां गिरिसुते
विजिग्ये जानुभ्यां विबुधकरिकुम्भद्वयमपि ॥८२॥
पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते
निषङ्गौ ते जङ्घे विषमविशिखो बाढमकृत ।
यदग्रे दृश्यन्ते दशशरफलाः पादयुगली
नखाग्रच्छद्मानः सुरमुकुटशाणैकनिशिताः ॥८३॥
श्रुतीनां मूर्द्धानो दधति तव यौ शेखरतया
ममाप्येतौ मातः शिरसि दयया धेहि चरणौ ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी
ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥८४॥
हिमानीहन्तव्यं हिमगिरितटाक्रान्तरुचिरौ
निशायां निद्राणं निशि च परभागेण विशदौ ।
परं लक्ष्मीपात्रं श्रियमभिसृजन्तौ प्रणयिनां
सरोजं त्वत्पादौ जननि जयतश्चित्रमिह किम् ॥८५॥
नमोवाचं ब्रूमो नयनरमणीयाय पदयो
स्तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकरुचे ।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते
पशूनामीशानः प्रमदवनकङ्केलितरवे ॥८६॥
मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं
ललाटे भर्तारं चरणयुगलं ताडयति ते ।
चिरादन्तःशल्यं दहनकृतमुन्मीलितवता
तुलाकोटिक्वाणैः किलकिलितमीशानरिपुणा ॥८७॥

पदन्ते कान्तीनां प्रपदमपदं देवि विपदां
कथं नीतं सद्भिः कठिनकमठीकर्परतुलाम्।
कथम्बा बाहुभ्यामुपयमनकाले पुरभिदा
तदादाय न्यस्तं दृषदि दयमानेन मनसा ॥८८॥
नखैर्नाकस्त्रीणां करकमलसङ्कोचशशिभिस्
तरूणां दिव्यानां हसत इव ते चण्डि चरणौ।
फलानि स्वःस्थेभ्यः किशलयकराग्रेण ददतां
दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥८९॥
कदा काले मातः कथय कलितालक्तकरसं
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम्।
प्रकृत्या मूकानामपि च कविताकारणतया
यदाधत्ते वाणीमुखकमलताम्बूलरसताम् ॥९०॥
पदन्यासक्रीडापरिचयमिवालब्धुमनसश्
चरन्तस्ते खेलां भवनकलहंसा न जहति।
सुविक्षेपे शिक्षां सुभगमणिमञ्जीररणित
च्छलादाचक्षाणं चरणकमलं चारुचरितम् ॥९१॥
अराला केशेषु प्रकृतिसरलानन्दहसिते
शिरीषाभा गात्रे दृषदिव कठोरा कुचतटे।
भृशं तन्वी मध्ये पृथुरसि वरारोहविषये
जगत्त्रातुं शम्भोर्जयति करुणा काचिदरुणा ॥९२॥
पुरारातेरन्तःपुरमसि ततस्त्वच्चरणयोः
सपर्यां मर्यादातरुणकरुणा नाम सुलभा।

तथा ह्येते नीताः शतमखमुखाः सिद्धिमतुलां
तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः ॥६३॥

गतास्ते पञ्चत्वं द्रुहिणहरिरुद्रेश्वरशिवाः
शिवस्वच्छच्छायाघटितकपटप्रच्छदपटः।
त्वदीयानां भासां प्रतिफलनलाभारुणतया
शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥६४॥

कलङ्कः कस्तूरीरजनिकरबिम्बं जलमयं
कलाभिः कर्पूरैर्मरकतकरण्डं निबिडितम्।
अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं
विधिर्भूयो भूयो निबिडयति नूनं तव कृते ॥६५॥

स्वदेहोद्भूताभि र्घृणिभिरणिमाद्याभिरभितो
निषेव्ये नित्ये त्वामहमिति सदा भावयति यः।
किमाश्चर्य्यं तस्य त्रिणयनसमृद्धिं तृणयतो
महासम्वर्त्ताग्निर्विरचयति नीराजनविधिम् ॥६६॥

समुद्भूतस्थूलस्तनभरमुरश्चारुहसितं
कटाक्षे कन्दर्पाः कतिचनकदम्बद्युतिवपुः।
रहस्यं तद्भ्रान्तिं मनसि जनयन्तः समतुलां
भवत्यां ये भक्ताः परिणतिरमीषामियमुमे ॥६७॥

कलत्रं वैधात्रं कति कति भजन्ते न कवयः
श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः।
महादेवं हित्वा तव सति सतीनामचरमे
कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः ॥६८॥

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो:
हरे:पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापि त्वं दुरधिगमनि:सीममहिमा
महामाये विश्वं भ्रमयसि परब्रह्ममहिषि ॥९९॥
सरस्वत्या लक्ष्म्या विधिहरिसपत्न्योर्विजयते
रते: पातिव्रात्यं शिथिलयति रम्येण वपुषा ।
चिरञ्जीवन्नेव क्षयितपशुपाशव्यतिकर:
परब्रह्माभिख्यं रसयति रसं त्वद्भजनवान् ॥१००॥
निधे नित्यस्मेरे निरवधिगुणे नीतिनिपुणे
निराघातज्ञाने नियमपरिचित्तैकनिलये ।
नियत्या निर्मुक्ते निखिलनिगमान्तस्तुतपदे
निरातङ्के नित्ये निगमय ममापि स्तुतिमिमाम् ॥१०१॥
प्रदीपज्वालाभिर्दिवसकरनीराजनविधि:
सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।
स्वकीयैरम्भोभि: सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥१०२॥
मञ्जीरशोभिचरणं वलिशोभिमध्यं
हाराभिरामकुचमम्बुरुहायताक्षम् ।
लीलालकं हिमम‍हीधरकन्यकाख्यं
ज्ञानस्वरूपमिदमीश्वरदीपदीप्यम् ॥१०३॥

इति शङ्कराचार्यविरचितानन्दलहरी समाप्ता ।

## मोहमुद्गरः ।



मूढ जहीहि जनागमतृष्णां
कुरु तनुबुद्धिमनःसु वितृष्णाम् ।
यल्लभसे निजकर्म्मोपात्तं वित्तं
तेन विनोदय चित्तम् ॥१॥

अर्थमनर्थं भावय नित्यं
नास्ति ततः सुखलेशः सत्यम् ।
पुत्रादपि धनभाजाम्भीतिः
सर्व्वत्रैषा कथिता नीतिः ॥२॥

का तव कान्ता कस्ते पुत्रः
संसारोऽयमतीव विचित्रः
कस्य त्वं वा कुत आयातः
तत्त्वं चिन्तय तदिदं भ्रातः ॥ ३ ॥

मा कुरु धनजनयौवनगर्व्वं
हरति निमेषात्कालः सर्व्वम् ।
मायामयमिदमखिलं हित्वा
ब्रह्मपदं प्रविशाशु विदित्वा ॥४॥

नलिनीदलगतजलमतितरलं
तद्वज्जीवनमतिशयचपलम् ।

विद्धि व्याधिव्यालग्रस्तं
लोकं शोकहतञ्च समस्तम्॥ ५॥
तत्त्वं चिन्तय सततं चित्ते
परिहर चिन्तां नश्वरवित्ते
क्षणमिह सज्जनसङ्गतिरेका
भवति भवार्णवतरणे नौका॥ ६॥
अष्टकुलाचलसप्तसमुद्रा
ब्रह्मपुरन्दरदिनकररुद्राः।
न त्वं नाहं नायं लोकः
तदपि किमर्थं क्रियते शोकः॥७॥
यावद्वित्तोपार्ज्जनशक्तः
तावन्निजपरिवारो रक्तः।
तदनु च जरया जर्ज्जरदेहे
वार्त्तां कोपि न पृच्छति गेहे॥८॥
कामं क्रोधं लोभं मोहं
त्यक्त्वात्मानम्पश्यति कोहम्।
आत्मज्ञानविहीना मूढा
ते पच्यन्ते नरके निगूढाः॥६॥
सुरमन्दिरतरुमूलनिवासः
शय्या भूतलमजिनं वासः।
सर्व्वपरिग्रहभोगत्यागः
कस्य सुखं न करोति विरागः॥१०॥

बालस्तावत् क्रीडासक्तः
तरुणस्तावत् तरुणीरक्तः।
वृद्धस्तावच्चिन्तामग्नः
परमे ब्रह्मणि कोऽपि न लग्नः ॥११॥
शत्रौ मित्रे पुत्रे बन्धौ
मा कुरु यत्नं विग्रहसन्धौ।
भव समचित्तः सर्व्वत्र त्वं
वाञ्छस्यचिराद् यदि विष्णुत्वम् ॥१२॥
यावज्जननं तावन्मरणं
तावज्जननीजठरे शयनम्।
इति संसारे स्फुटतरदोषः
कथमिह मानव तव सन्तोषः ॥१३॥
दिनयामिन्यौ सायं प्रातः
शिशिरवसन्तौ पुनरायातः।
कालः क्रीडति गच्छत्यायुः
तदपि न मुञ्चत्याशावायुः ॥१४॥
अङ्गं गलितं पलितं मुण्डं
दन्तविहीनं यातं तुण्डम्।
करधृतकम्पितशोभितदण्डं
तदपि न मुञ्चत्याशाभाण्डम् ॥१५॥
त्वयि मयि चान्यत्रैको विष्णुः
व्यर्थं कुप्यसि मय्यसहिष्णुः।

सर्व पश्यात्मन्यात्मानं
सर्वत्रोत्सृज भेदज्ञानम् ॥१६॥
षोडशपज्झटिकाभिरशेषः
शिष्याणां कथितोऽभ्युपदेशः ।
येषां नैष करोति विवेकं
तेषां कः कुरुतामतिरेकम् ॥१७॥

इति श्रीशङ्कराचार्य्यविरचितो मोहमुद्गरः समाप्तः ॥



## विदग्धमुखमण्डनम् ।

सिद्धौषधानि भवदुःखमहागदानां
पुण्यात्मनां परमकर्णरसायनानि ।
प्रक्षालनैकसलिलानि मनोमलानां
शौद्धोदनेः प्रवचनानि चिरं जयन्ति ॥१॥
जयन्ति सन्तः सुकृतैकभाजनं
परार्थसम्पादनसद्व्रतस्थिताः ।
करस्थनीरोपमविश्वदर्शिनो
जयन्ति वैदग्ध्यभुवः कवेर्गिरः ॥२॥
आक्रान्तेव महोपलेन मुनिना शप्तेव दुर्वाससा
सातत्यं वत मुद्रितेव जतुना नीतेव मूर्च्छां विषैः ।

बद्धेवातनुरज्जुभिः परगुणान्वक्तुं न शक्ता सती
जिह्वा लोहशलाकया खलमुखे विद्धेव संलक्ष्यते ॥३॥

दृष्टानेके सत्यं सततमुपकारिण्युपकृतिं
कृतज्ञाः कुर्वन्तो जगति निवसन्त्येव सुधियः ।
कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो
विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥४॥

बध्वाञ्जलिं सममसज्जनसज्जनौ तौ
वन्दे नितान्तकुटिलप्रगुणस्वभावौ ।
एकं भिया निरभिसन्धितवैरिभूतं
प्रीत्यापरं परमनिर्वृतिपात्रभूतम् ॥ ५ ॥

किन्नोऽथवा हतखलप्रणतावपि स्यात्
स स्वी करोति सुजनो यदि मां गुणज्ञः ।
चन्द्रेण चारुचरितेन विकासितं सत्
सङ्कोचितं भवति किं कुमुदन्तमोभिः ॥६॥

प्रीत्यै सतान्तदनुभावगतावसादः
संत्यज्य गूढरचनां प्रतिभानुरूपम् ।
क्षिप्रावबोधकरणक्षममीप्सितार्थं
वक्ष्ये विदग्धमुखमण्डनसप्रपञ्चम् ॥७॥

यद्यस्ति सभामध्ये स्थातुं वक्तुं मनस्तदा सुधियः ।
ताम्बूलमिव गृहीत्वा विदग्धमुखमण्डनं विशत ॥८॥

प्राज्ञैर्व्यस्तं समस्तं च द्विर्व्यस्तं द्विःसमस्तकम् ।
तथा व्यस्तसमस्तञ्च द्विर्व्यस्तं द्विःसमस्तकम् ॥९॥

सद्भिःसमस्तव्यस्तमेकालापं प्रभिन्नकम् ।
भेदभेदकमोजस्विसालङ्कारं सकौतुकम् ॥१०॥
प्रश्नोत्तरसमं पृष्टप्रश्नं भग्नोत्तरं तथा ।
आदिमध्योत्तराख्ये द्वे अन्तोत्तरमतःपरम् ॥११॥
कथितापह्नुतिश्चैव विषमं वृत्तनामकम् ।
नामाख्यातं च तार्क्ष्यं च सौत्रं शब्दीयशास्त्रजे ॥१२॥
वर्णवाक्योत्तरे तद्वत् श्लोकोत्तरमतःपरम् ।
खण्डपादोत्तरे चक्रं पद्मं काकपदं तथा ॥१३॥
गोमूत्री सर्वतोभद्रं गतप्रत्यागतं वज्रं ।
वर्द्धमानाक्षरं तद्वद्धीयमानाक्षरं तथा ॥१४॥
शृङ्खला नागपाशं च चित्रं संशुद्धमेव च ।
प्रहेलिका तथा हृद्यं कालसारादि वर्णितम् ॥१५॥
अजसारादिकं गूढं पदपादार्थगूढकम् ।
स्तुतिनिन्दा तथा ह्यर्थं सहापह्नुति विन्दुमत् ॥१६॥
क्रियाकारकसम्बन्धगुप्तान्यामन्त्रितस्य च ।
गुप्तं तथा समासस्य लिङ्गस्य वचनस्य च ॥१७॥
मात्राविन्दुविसर्गाणां च्युतकान्यक्षरस्य च ।
स्थानव्यञ्जनयोश्चापि च्युतदत्ताक्षरं तथा ॥१८॥

इत्यौद्देशकम् ।

पृष्टं पदविभागेन केवलेनैव यद्भवेत् ।
विदुर्व्यस्तं समस्तं यत्समुदायेन पृच्छ्यते ॥१९॥
पूजायां किं पदं प्रोक्तमस्त्रनं को विभर्त्युरः ।

क आयुधतया ख्यातः प्रलम्बासुरविद्विषः ॥२०॥ सुनःसीर
को दुराख्यस्य सोह्याय का प्रिया सुरविद्विषः ।
पदं प्रश्नवितर्के किं को दन्तच्छदभूषणम् ॥२१॥
रामानुरागः । इति व्यस्तजातिः ॥

अपि सेविता द्विजिह्वैः कदापि के न यान्ति विकारं
विच्छिद्यमानतनवः स्वगुणैरधिकं विराजन्ते ॥२२॥
मलयतरवः ॥

अनिभृतकोकिलनिःस्वनमुखरितसहकारकाननः पुंस
को भवति हृदयहारी मधुकरझङ्कारकङ्केलिः ॥२३॥
मधुसमयः ॥ इति समस्तजातिः ॥

व्यस्तं समस्तमथवा समासपदभङ्गतः ।
द्विःपृष्टं यत्तदेव स्याद् द्विर्व्यस्तं द्विःसमस्तकम् ॥२४॥

वर्षासु का भवति निर्मधु कीदृगब्जं
शेषं बिभर्त्ति वसुधासहितं क एकः ।
आमन्त्रयस्व धरणीधरनाथपुत्रीं
कोऽत्रास्थि भस्मनि चिताङ्गजनाश्रयः स्यात् ॥२५॥
कालिकापालिकमठः ॥

कीदृशं वद मरुस्थलं मतं
हारि कुत्र सति भूषणं भवेत् ।
ब्रूहि कान्त सुभटः सकार्मुकः
कीदृशो भवति कुत्र विद्विषाम् ॥२६॥
अवारितोरणे । इति द्विर्व्यस्तजातिः ॥

पक्षिश्रेष्ठसखीवभ्रुसुता वाच्याः कथं वद ।
ज्येष्ठे मासि गताः शोषं कीदृश्योऽल्पजला भुवः ॥२७॥
विवरालीनकुलीराः ।
विश्वम्भराप्रलम्बघ्नव्रीहिमानुषसंयतः ।
कथं वाच्याः भवंत्येता दिनादौ विकसन्ति काः ॥२८॥
कुवलयवनराजयः ॥ इति द्विःसमस्तजातिः ॥
दृष्टं पदविभागेन समुदायेन यद्भवेत् ।
विदुर्व्यस्तसमस्तं तदुभयार्थप्रदर्शनात् ॥२९॥
का प्रियेण रहिता वराङ्गना
धाम्नि केन तनयेन नन्दिता ।
कीदृशेन पुरुषेण पक्षिणां
बन्धनं समभिलष्यते सदा ॥३०॥ शकुन्तलाभरतेन ॥
कीदृशं हृदयहारि कूजितं
कः सखा यशसि भूपतेर्मतः ।
कस्तवास्ति विपिने भयाकुलः
कीदृशश्च न भवेन्निशाकरः ॥३१॥
कलङ्कविरहितः ॥ इति व्यस्तसमस्तजातिः ॥
द्विर्व्यस्तमेव यत्दृष्टं समुदायेन यद्भवेत् ।
त्रिधाभिन्नं तदेवोक्तं द्विर्व्यस्तकसमस्तकम् ॥३२॥
कौ शङ्करस्य वलयावपयोधरः कः
कीदृक् परस्य नियतं वशमेति भूपः ।

सम्बोधयोरगपतिं विजयी च कीदृग्
दुर्य्योधनो नहि भवेद्वद कीदृशश्च॥३३॥ अहीनाजतनयः
का मोहाय दुरीश्वरस्य विहितः सम्बोधनीयो गुरुः
को भार्य्यां विरलः कलौ नवघनः किंवन्न कीदृग्द्विजः ।
किं लेखावचनं भवेदतिशयन्दुःखाय कीदृक् खलः
को विद्याधिपतिर्मनोभवसमो मूर्खो भवन् कीदृशः॥३४॥
राजीवसन्निभवदनः । इति द्विर्व्यस्तसमस्तजातिः ॥

द्विःसमस्तं यदा दृष्टं व्यस्तकेन पुनर्भवेत् ।
तद् द्विःसमस्तकव्यस्तं कथितं प्रश्नपण्डितैः ॥३५॥

कीदृक्षः सकलजनो भवेत्सुराज्ञः
कः कालो विदित इहान्धकारहेतुः ।
कः प्रेयान् कुमुदवनस्य को निहन्ति
भ्रातव्यं वद शिरसा जितस्त्वया कः ॥३६॥
विधुरविरहितः ॥

संग्रामे स्फुरदसिना हतास्त्वया के
के दुःखं वत निरये नरस्य कुर्य्युः ।
कस्मिन् उद्भवति कदापि नैव लोम
ख्याताः के जगति महाबलत्वभाजः ॥३७॥
नरकरैणवः ॥ इति द्विःसमस्तकव्यस्तजातिः ॥

एकश्रुत्या वचो यत्र भिन्नार्थप्रतिपादकम् ।
प्रभेदं द्विःसमस्तस्य तमेकालापकं विदुः ॥३८॥

कीदृशी निरयभूरनेकधा सेव्यते परमपापकर्मभिः ।

प्रेतराक्षसपिशाचसेविता कीदृशी च पितृकानन
नरकपालरचिता॥ [स्थली ॥३९॥
केसरक्षतलतेषु संस्थितः
कीदृशो भवति मत्तकुञ्जरः।
तत्त्वतः शिवमपेक्ष्य लक्षणैर्
अर्जुनः समिति कीदृशो भवेत् ॥४०॥
दानवकुलभ्रमरहितः। इत्येकालापकजातिः॥
शब्दार्थलिङ्गवचनैर्व्यस्तैर्थद्वा समस्तकैः।
विभक्त्या च प्रभिन्नं यत्तत् प्रभिन्नकमुच्यते ॥४१॥
निर्जितसकलारातिः पृच्छति
को नैको ह्यत्योर्भयमृच्छति।
मेवात्ययक्षतरुचिराशायाः
किं तिमिरक्षयकारिनिशायाः ॥४२॥ विधुताराातेजः॥
विहगपतिः कं हृतवानहितं
कीदृग् भवति पुरं जनसहितम्।
किं कठिनं विदितं वद धीमद्वादः
पतिरपि कीदृग् भयकृत् ॥४३॥
अहिमकरमयः। इति शब्दार्थलिङ्गप्रभिन्नकम्॥
अनुकूलविधायिदैवतो
विजयी स्यान्न तु कीदृशो नृपः।
विरहिण्यपि जानकी वने
निवसन्ती मुदमादधौ कुतः ॥४४॥ कुशलवर्द्धितः॥

कुसुमं पतदेत्य नाकतो वद कस्मै स्पृहयन्ति भोगिनः।
अधिगम्य रतं वराङ्गना क्व नु यत्नं कुरुते मुधिश्चिता
सुरतरवे॥ इति शब्दार्थभिन्नम्॥
कामुज्जहार हरिरम्बुधिमध्यमग्नां
कीदृक् श्रुतं भवति निर्मलमागमानाम्।
आमन्त्रयस्व वनमग्निशिखावलीढं
तत्रापि को दहति के मदयन्ति भृङ्गान्॥४६॥
कुन्दमकरन्दविन्दवः॥
वसति कुत्र सरोरुहसन्ततिर्
दिनकृतो ननु के तिमिरच्छिदः।
पवनभक्षसपत्नरणोत्सुकं
पुरुषमाह्वय को जगति प्रियः॥४७॥
केकिरणोत्कराः॥ इति शब्दार्थवचनभिन्नम्॥
कीदृग् गृहं याम्यगृहङ्गतस्य
कास्त्राणमत्रास्तरणे जनानाम्।
भूषा कथं कण्ठ न ते नु दृष्टे
मुक्ताकलापैरिति चोत्तरं किम्॥४८॥ हाराविनावः॥
कवयो वद कत्र कीदृशाः कठिनं किं विदितं समन्ततः
अधुना तव वैरियोषितां हृदि तापः प्रबलो
[विहाय काः॥४९॥
गिरिसारसुधाः। इतिशब्दार्थलिङ्गवचनविभक्तिभिन्नं॥
सेवात्यये भवति किं सुभगावगाहं

का वा विडम्बयति चारणमल्लवेश्याः।
दुर्वारवीर्यविभवस्य रणे भवेत् कः
काः स्मेरवक्त्रसुभगास्तरणिप्रभाभिः ॥५०॥
सरोजराजयः॥

पृच्छति शिरोरुहो मधुमथनं
मधुमथनस्तं शिरोरुहञ्च।
कः खलु चपलतया भुवि विदितः
का ननु यानतया गवि विदिताः ॥५१॥
केशवनौकाः। इति शब्दार्थलिङ्गवचनभिन्नम्॥
न भवति मलयस्य कीदृशी भूः
कदिह कुचं न बिभर्त्ति कं गता द्यौः।
भवदरिनिवहेषु कास्ति नित्यं
बलमथनेन विपद् व्यधायि केषाम् ॥५२॥ विपन्नगानां
समयमिह वदन्ति कं निशीथं
शमयति कान् वद वारिवाहवृन्दम्।
वितरति जगतां मनःसु कीदृङ्
मुदमतिमात्रमयं महातडागः ॥५३॥ अरविन्दवान्॥
इति शब्दार्थविभक्तिवचनभिन्नम्॥
के हन्त समिति बलं निहन्ति शल्
विष्णोः का मनसि मुदं सदा तनोति।
तुच्छं सच्छरधिमुखं निगद्यते किं
पञ्चत्वैः सममपमानएव केषु ॥५४॥ अभिमानिषु॥

घनसमये शिखिषु स्यान्नृत्यं
कीदृङ्नु किं घनात् पतति ।
प्रावृषि कस्य न गमनं
मानसगमनाय कीदृशा हंसाः ॥५५॥ समुत्सुकमनसः
इति शब्दार्थलिङ्गवचनभिन्नम् । इति प्रभिन्नकजा[illegible]
अर्थमात्रैकभेदेन भिन्नं बध्नन्ति केचन ।
सुकुमारधियस्तञ्च विदग्धै र्नादृतं यथा ॥५६॥
आनन्दयति कोऽत्यर्थं सज्जनानेव भूतले ।
प्रबोधयति पद्मानि तमांसि च निहन्ति कः ॥५७॥
मित्रोदयः ॥
अटवी कीदृशी प्रायो दुर्गमा भवति प्रिये ।
प्रियस्य कीदृशी कान्ता तनोति सुरतोत्सवम् ॥५८॥
मदनवती ॥
भिन्नाववश्यं कर्त्तव्यौ शब्दार्थौ प्रश्नकोविदैः ।
लिङ्गादिषु यथा शक्ति भेदभाग्भिर्विपश्चितः ॥५९॥

इति श्रीधर्म्मदासविरचिते विदग्धमुखमण्डने
प्रथमः परिच्छेदः ।

विशेषणं विशेष्यञ्च यत्र प्रश्ने विधीयते ।
भेद्यभेदकभाक्तं प्रश्नं प्रश्नविदो यथा ॥१॥
कीदृक् किं स्यान्न मत्स्यानां हितं स्वेच्छाविहारिणाम्
गुणैःपरेषामत्यर्थं मोदते कीदृशःपुमान् ॥२॥ विमत्सरः

अगस्त्येन पयोराशेः कियत् किं पीतमुज्झितम् ।
त्वया वैरिकुलं वीर समरे कीदृशं कृतम् ॥३॥
सकलङ्कम् । इति भेद्यभेदकजातिः ॥
दीर्घवृत्तेन यत् दृष्टमुत्तरं कियदक्षरम् ।
तद्राजकीर्ति विख्यातमूर्जितं चेति केचन ॥४॥
कामिन्यास्तनभारमन्थरगतेर्लीलाचलच्चक्षुषः
कन्दर्पैकविलासनित्यवसतेः कीदृक् पुमान्वल्लभः ।
हेलाकृष्टकृपाणपाटितगजानीकात्कुतस्तेऽरयः
श्वासायासविशुष्ककण्ठकुहरा निर्यान्ति जीवार्थिनः॥५
दैत्यारातिरसौ वराहवपुषा कामुज्जहाराम्बुधे
का रूपं विनिहन्ति को मधुवधूवैधव्यदीक्षागुरुः ।
स्वच्छन्दं नवशल्लकीकवलनैः पम्पासरोमज्जनैः
के विन्ध्याद्रिवने वसन्त्यभिमतक्रीडाभिरामस्थिताः॥६॥
कुञ्जराः । इत्योजस्विजातिः ॥
उपमादिरलङ्कारो बहुधा परिकीर्त्तितः ।
यत्नेन कथ्यते साङ्गं सालङ्कारं तदुच्यते ॥७॥
कल्याणवाक् त्वमिव किं पदमत्र कान्तं
सद्भूपतेस्त्वमिव कः परितोषकारी ।
कः सर्वदा दृषगतिस्त्वमिवातिमात्रं
अत्यार्थितः कथय पालितसर्वभूतः ॥८॥ शङ्करः ॥
सूर्य्यस्य का तिमिरकुञ्जरवृन्दसिंही
सत्यस्य का सुकृतवारिधिचन्द्रलेखा ।

पार्थस्य कीदृगरिदारकुन्ताशनोभूत्
का मालतीकुसुमदाम हरस्य मूर्ध्नि ॥९॥
भागीरथी । रूपकं सालङ्कारजातिः ॥
लघुवृत्तेन यत् दृष्टं प्रश्नस्ताक्षरमुत्तरम् ।
सकौतुकमितीच्छन्ति तद्विदस्तदिदं यथा ॥१०॥
के स्थिराः के प्रियास्त्रीणां को ऽप्रियो नक्तमाह्वय ।
नृत्यभूः कीदृशी रथ्या नदी कीदृग्घनागमे ॥११॥
अगाधवारिपूरजनिततरङ्गा ॥
का कृता विष्णुना कीदृग्योषितां कः प्रशस्यते ।
असेव्यः कीदृशः स्वामी को निहन्ति निशातमः ॥१२॥
कुमुदवनबान्धवोदयः ॥ इति सकौतुकजातिः ॥
प्रश्नवर्णश्रुतेस्तुल्यं यत्र स्यादुत्तरं वरम् ।
प्रश्नोत्तरसमन्तज्ज्ञास्तदाज्ञः श्रूयतां यथा ॥१३॥
कन्दर्पं मदनजनकं प्राज्ञः काचघटीगदिताच्छदमे
इत्यादि प्रश्ने युक्तं यद्ब्रूततदुत्तरमाशु विचिन्त्य ॥१४॥
पथिकस्तिष्ठति कष्टं विरहो नायिकश्चास्ते तत्सतर...
इत्यादि प्रश्ने युक्तं यद्ब्रूहि तदुत्तरमुत्तमपुरुष ॥१५॥
इति प्रश्नोत्तरसमजातिः ॥
तस्मिन्नुत्तरमुच्चार्य्य प्रश्नस्तस्यैव दृश्यते ।
दृष्टप्रश्नं तदिच्छन्ति प्रश्नोत्तरविदो यथा ॥१६॥
तज्ज्ञणेत्युत्तरं यत्र प्रश्न स्यात्तत्र कीदृश ।
ग्रीष्मे द्विरदवृन्दाय वनाली कीदृशी हिता ॥१७॥

कासारसहिता ॥

चाद्य इति यत्र स्यादुत्तरमथ तत्र कीदृशः प्रश्नः ।
कथय त्वरितं के स्युनौकाया वाहनोपायाः ॥१८॥

केनिपाताः । इति दृष्टप्रश्नजातिः ॥

कथयामुकमित्यादि भंक्त्वा यत्रोत्तरं भवेत् ।
भग्नोत्तरं तदिच्छन्ति काकुमात्रेण गोपितम् ॥१९॥

भवत इवाति स्वच्छं कस्याभ्यन्तरमगाधमतिशिशिरम् ।
काव्यामृतरसमग्नस्त्वमिव सदा कः कथय सरसः ॥२०॥

वीरे सत्यपि रिपूणां नियतं का हृदयशालिनी भवति ।
नभसि प्रस्थितजलदे का राजति देव वद तारा ॥२१॥

इति भग्नोत्तरजातिः ॥

यत्पृष्टं प्रश्नवाक्ये स्यादादिमध्यान्तसंस्थितम् ।
उत्तरं तत् त्रिधा प्रोक्तमादिमध्यान्तसंस्थितम् ॥२२॥

भ्रमरहितः कीदृक्षो भवतितरां विकसितः पद्मः ।
ज्योतिषि कः कीदृक्षः प्रायो
भुवि पूज्यते लोकैः ॥२३॥

प्रभवः को गङ्गाया नगपतिरतिसुभगश्चन्द्रधरः ।
के सेव्यन्ते सेवकसार्थैरत्यर्थमर्थरतैः ॥२४॥ आद्युत्तरजातिः ॥

अयमुदितो हिमरश्मिर्वनितावदनस्य कीदृशः सदृशः ।
नीलादिकोपलम्भः स्फुरति प्रत्यक्षतः कस्य ॥२५॥

गौरिकमनःशिलादिः

प्रायेणोत्पद्यते कुतो न गतः ।
यः खलु न चलति पुरुषः
स्थानाद्दुक्तः स कीदृक्षः ॥२७॥ इति मध्योत्तरजातिः ।
कस्मिन्वसन्ति वद मीनगणा विकल्पं
किं वा पदं वदति किं कुरुते विवस्वान् ।
विद्युल्लतावलयवान् पथिकाङ्गनानाम्
उद्वेजको भवति कः खलु वारिवाहः
शब्दः प्रभूगत इति प्रचुराभिधायी
कीदृग् भवेद्वदत शब्दविदो विचिन्त्य ।
कीदृग् बृहस्पतिमते विदिताभियोगः
प्रायः पुमान् भवति नास्तिकवर्गमध्यः ॥२८॥
इत्यन्तोत्तरजातिः ॥
पदान्तरादिसंबन्धात्मन्वाक्येपि संस्थितम् ।
कथितापह्नुतिः सा स्याल्लक्ष्यते यत्र नोत्तरम् ॥२९॥
पृथ्वीसम्बोधनं कीदृक् कविना परिकीर्त्तितम् ।
केनेदं मोहितं विश्वं प्रायः केनाप्यते यशः ॥३०॥
कश्च मरौ दुरधिगमः
कमले कः कथय विरचितावासः
कौस्तुभ्यति चासुरण्डा
रिपवस्ते कुतो भ्रष्टाः ॥३१॥ इति कथितापह्नुतिजातिः
यत्र समस्य वैशम्यं विषमन्तन्निगद्यते ।
वृत्तं नामोत्तरं यत्र प्रश्नं तद्वृत्तनामकम् ॥३२॥

कीदृग्वनं स्यान्न भयाय दृष्टे
यदुत्तरं तस्य च कीदृशस्य।
वाच्यं भवेदीक्षणजातमम्बु
कं चाधिशेते गवि कोऽर्चनीयः ॥३३॥ अहिंस्रमहिमः॥

प्रायः कार्ये न मुह्यन्ति नराः सर्वत्र कीदृशाः
नाधाइति भवेच्छब्दो नौवाची वद कीदृशः ॥३४॥
सावधानाः॥ इति विषमजातिः॥

गतक्लेशायासा विमलमनसः कुत्र मुनयस्
तपस्यन्ति स्वस्थाः मुररिपुरिपोः का च दयिता।
कविप्रेयः किं स्यान्नवलघुयुतैरष्टगुरुभिर्
बुधावृत्तं वर्णैः स्फुटघटितबन्धं कथयत॥३५॥ शिखरिणी॥

उरसि मुरभिदः का गाढमालिङ्गितास्ते
सरसिजमकरन्दामोदिता नन्दने का।
गिरिसमलघुवर्णैरर्णवाख्यातिसंख्यैर्
गुरुभिरपि कृता का छन्दसां वृत्तिरम्या॥३६॥
मालिनी॥ इति वृत्तनामजातिः॥

एकमेवोत्तरं यत्र सुश्लिष्टत्वाद्द्विधा भवेत्।
सुप्तिङन्तप्रभेदेन नामाख्यातन्तदुच्यते॥३७॥

समरशिरसि सैन्यं कीदृशं दुर्निवारं
विगतघननिशीथे कीदृशी व्योम्नि शोभा।
कमपि विधिवशेन प्राप्य योग्याभिमानं
जगदखिलमनिन्द्यादुर्जनः किं करोति॥३८॥

पदमनन्तरवाचि किमिष्यते [अभिभवति॥
कपिपतिर्विजयी ननु कीदृशः।
परगुणं गतिवुङ्गतमत्सराः
कुरुत किं सततं भुवि सज्जनाः॥३९॥ अनुसरामः॥
वदति राममलुब्ध जघन्यजो
वसति क्व सदालसमानसः।
अपि च शक्रसुतेन तिरस्कृतो
रविसुतः किमसौ विदधे त्वया॥४०॥ अनुजगृहे॥
भवति गमनयोग्या कीदृशी भूरथानां
कमतिमधुरमन्नं भोजनान्ते प्रदेयम्।
प्रियतम वद नीचामन्त्रणे किं पदं स्यात्
कुमतिकृतविवादाश्छिद्रिरे किं सदर्थैः॥४१॥ समादधि
वदतानुत्तमवचनं ध्वनिरुचैरुच्यते स कीदृक्षः।[लि
तव सुहृदो गुणनिवहैरिपुनिवहं किं नु कर्तारः॥४२
अवमन्तारः॥
कीदृक्षोयं दुस्तरं स्यात्तितीर्षोः
का पूज्यास्मिन् खड्ग मामन्त्रयस्व।
दृष्ट्वा धूमं दूरतो मानविज्ञा
किं कर्तास्मि प्रातरेवाश्रयाशम्॥४३॥
अनुमातास्मि। लुट्लकारः॥
कामुकाःस्युः कया नीचाः सर्वः कस्मिन् प्रमोदते।

अर्थिनः माघ पुण्याहं कारयध्वे वदन्ति किम्॥४४

दास्यामहे ॥

को दुःखी सर्वकार्य्येषु किं मृगार्थस्य वाचकम् ।
यो यत्र विरतो नित्यन्ततः किं स करिष्यति ॥४५॥

प्रयास्यति ॥ लृट् ॥

विद्यन्त इति समानार्थः शब्दः
कोऽचिरयति मुद्रां किम् ।
कथमपि यदि कोपः स्यात्तं सुजनः
किं करोतु वद ॥४६॥ सन्त्यजतु ॥

मेघात्यये भवति का सुभगावगाहा
वृत्तं वसन्ततिलकं कियदक्षराणाम् ।
भो भोः कदर्यपुरुषा विषुवद्दिने च
वित्तञ्च न सुवज्ञ तत् क्रियतां किमेतत् ॥४७॥

नदीयतां ॥ लोट् ॥

का माद्यति मकरन्दैस्
तनयं कमसूत जनकराजसुता ।
कथय कृषीवल सस्यं पक्वं
किमचीकरस्त्वमपि ॥४८॥ अलीलवम् ॥

पृच्छति पुरुषः कोऽस्यां
समभूवन्नक्षत्रपञ्चतयः ।
बङ्गभयदेशं जिगमिषुरे
काको वार्य्यते च कथं ॥४९॥ मानवनगाः ॥ लुङ् ॥

किमकार्षमहं हरिमहोधं

स्वभुजबलेन गवां हितं विधित्सुः ।
प्रियतम वदने न पीयते कः
परिणतबिम्बफलोपमः प्रियायाः ॥५०॥ अधरः ॥
परिहरति भयात्त्वयाहित किं
कमथ कदापि न विन्दतीह भीतः ।
कथय किमकरोरिमां धरित्रीं
नृपति गुणैर्नृपते स्वयं त्वमेकः ॥५१॥ समयञ्जयं लङ्
कीदृक् सेना भवति रणे दुर्वारा
वीरः कस्मै स्पृहयति लक्ष्मीमिच्छन् ।
का सम्बुद्धिर्भवति भवः संग्रामे
किंकुर्वीध्वं सुभटजनाभ्राटव्यान् ॥५२॥ पराजयेमहि॥
कंसारातेर्वद गमनं केन स्यात्
कस्मिन् हृष्टिं लभते स्वल्पेच्छुः ।
कं सर्वेषां शुभमूचुर्वीराः
किं कुर्य्यास्त्वं सुजन सशोकलोकं ॥५३॥ विनोदयेयंलिङ्
वारणेन्द्रो भवेत्कीदृक् पीतये स्वजनसंहते ।
यद्ययच्छं तदास्मै किमकरिष्यमहं धनं ॥५४॥ समदास्य
काले देशे यथा युक्तं नरः कुर्वन्नुपैतिकां ।
भुक्तवन्तावलप्सेतां किममन्नमकरिष्यतां ॥५५॥
अहास्यतां । लृङ् ॥ इति नामाख्यातजातिः ।
ज्ञेयन्ताक्ष्र्यदृशा तार्क्ष्यं सौतं स्वलोत्तरैस्तया ।
शाल्वेयं [illegible] ॥५६॥

हिमानीस्थगिरौ ख्यातौ कीदृशौ शशिभास्करौ।
कः पूज्यः कः प्रमाणेभ्यो न प्रभाकरसंमतः ॥५७॥
अभावः ॥
के प्रवीणाः कुतो हीनं जीर्णं वासोंशुमांश्च कः।
निराकरिष्णवो बाह्यं योगाचाराश्च कीदृशाः ॥५८॥
विज्ञानवादिनः ॥ तार्क्ष्यजातिः ॥
यो नयति जगदशेषं क्षयमथ विभराम्बभूव कं विष्णुः।
नीचः कुलसगर्वः पाणिनिसूत्रं च कीदृशं॥५९॥ यमोगंधने
किं स्याद्विशेष्यनिष्ठं का संख्या वदत पूरणी भवति।
नीचः केन सवर्गः सूत्रं चन्द्रस्य कीदृशम् ॥६०॥
विशेषणमेकार्थेन। इति सौत्रजातिः ॥
न स्तावते खलः कस्मै सुप्तिङन्तं किमुच्यते।
लादेशानां नवानाञ्च तिङां किं नाम कथ्यतां ॥६१॥
परस्मैपदम् ॥
किमव्ययतया ख्यातं कस्य लोपो विधीयते।
ब्रूतः शब्दविदो ज्ञात्वा समाहारः क उच्यते ॥६२॥
स्वरितः। शाब्दीयजातिः ॥
जलदात्यये भवति कः
समदः सुभगश्च किं कमधरब्भुरभित्।
कटुतैलमिश्रितो गुडो नियतं
विनिहन्ति कं त्रिगुणसप्तदिनैः ॥६३॥ श्वासरोगम् ॥
कीदृक् प्रातर्दीपवर्त्ते शिखा स्याद्

उष्ट्र पृच्छत्याभजन्ते मृगाः किम् ।
देवामात्ये किं गते प्रायशोसौ
लोकः कुर्य्यान्नो विवाहं विविक्तः ॥६४॥ विभाकरभवन
वर्ण एवोत्तरं यत्र तद्वर्णोत्तरमुच्यते ।
वाक्यं यत्रोत्तरं तत्तु वाक्योत्तरमिति स्मृतम् ॥६५॥
कौ यदू भुवि विख्यातौ शोकं वदति किं पदम् ।
कोभीष्टोत्र दरिद्रस्य सेव्यन्ते के च भिक्षुभिः ॥६६॥ वीहा
किं मुञ्चन्ति पयोवाहा कीदृशी हरिवल्लभाः ।
पूजायां किं पदं कोग्निः कः कृष्णेन हतो रिपुः ॥६७
कंसासुरः । वर्णोत्तरजातिः ॥
दधौ हरिः कं भुवि कीदृगब्धं
पृच्छत्यक किं कुरुते सशोकः ।
स्तोकं विधायापि किमित्युदारः
कविर्न तोषं समुपैति भूयः ॥६८॥ अगमकनकरोदि
लक्ष्मीधरः पृच्छति कीदृशः स्यात्
नृप सपत्नैरपि दुर्निवारः ।
अकारि किं ब्रूहि नरेश सम्यक्
पितृत्वमारोपयितुं स्वकीयम् ॥६९॥
समजनिततनयः । इति वाक्योत्तरजातिः ।

इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
द्वितीयः परिच्छेदः ।

—•⊙•—

श्लोक एवोत्तरं यत्र तत् श्लोकोत्तरमुच्यते ।
खण्डोत्तरं भवेदर्धं श्लोकात्पादात्तदुत्तरम् ॥१॥

कन्देरङ्कैर्वयन्ति स्फुटरुचिनिशि किं कीदृशीदुःखिनीस्त्री
कीदृक्चक्रं सदालेक च तव विजयी प्राट्षं कीदृशं खं।
कामाङ्कःप्रेतयोग्यांकथय सकृतिनःकीदृशाःस्युःपुमांसः
कं धत्ते कश्च धत्ते गगनतलमलं प्रेक्षणीयं जनानां॥२॥

लक्ष्मः कीदृक्च कास्ति स्फुटनवकुसुमाशोकमासाद्यकालं
किं मुञ्चन्त्यम्बुवाहा भवदरिनिवहे संज्वरः किं भवस्थ।
किं नेत्रप्राप्तिः स्यादतिशयलघवः के च को व्रीहिभेदः
प्रायेण प्राट्षेण्याः प्रियतमदिवसाः कीदृशाः कीदृशास्स्युः॥

अञ्जनाभमहावारिवाहौघनिचिताम्बराः ।
कदम्बकन्दलीकन्दरजः पल्लवायवः ॥४॥

कुर्यादुद्वेगवन्तं कमपि निशिसरः कीदृशं कान्तिवक्त्रे
वक्ता निन्द्यः कयास्यात्परिषदिनियतं मन्दसम्बोधनं किं।
वर्णोपान्त्याङ्कमूचुः किमसुररिपुणा नन्दगोपालयेऽस्तं
कःप्रालेयाद्रिपुत्रीकुचकलशलुठत्पाणिरेणाङ्कमौलिः॥५॥

कं हन्त कस्येह बन्धः सुकृतमपहरत्प्रेयसी कालयान्ते
कीदृक्भीतिं विधत्तेधनुरवनिरुहां कश्चिदामन्त्रयस्व।
दैत्यः कंसद्विषा कः कथय विनिहतो गह्वरः कःप्रतीतः
कीदृक्कीदृग्वसन्तः प्रियतम भवतः प्रीतये नित्यमस्तु॥६॥

कोकिलालापवाचालसहकारमनोहरः ।
अशोकस्तवकालीनमत्तालिमधुरस्वनः ॥७॥

इति श्लोकोत्तरजातिः ॥

का चक्रे हरिणा धने कृपणयोः कीदृक् भुजङ्गेऽस्ति वि
कीदृक् कुम्भसमुद्भवस्य जठरं कीदृग्यथासुरवधूः ।
श्लोकः कीदृगभीप्सितः सुकृतिनां कीदृङ्मो निर्मलं
चौर्षीमाह्वाय सर्वगं किमुदितं रात्रौ सरः कीदृशं
कुमुदवनपरागरंजिताम्भोविहितगमागमकोकमुग्धरे
बन्धः पृच्छति किं सुरारिशयनं का हन्ति रूपं नृणा
कीदृग्वीरजनस्य कीर्त्तिगहनः सम्बोधयावञ्छितं
का धात्री जगतो हृहस्पतिवधूः कीदृक् कविः कादृ
कोऽर्थः किं भवता कृतं रिपुकुलं कीदृक् सरो वासरे॥
विकचवारिजराजिसमुद्भवोच्चलितभूरिपरागविराजित

इति खण्डोत्तरजातिः ॥

बिभर्त्ति वदनेन किं कइह सत्वपीडाकरं
कुलं भवति कीदृशं गलितयौवनं योषितां ।
बभार हरिरम्बुधेरुपरि कांच केन स्तुतो हतः
कथय कस्त्वया नगपते भयं कीदृशात् ॥१०॥
विषमपादनिकुञ्जगताहितः ॥

हरिर्वहति कान्तवास्त्यारिप कागताकञ्च
काकमर्द्दयति रोगवान् धनवती पुरी कीदृशी ।
हरिः कामधरहलिप्रमृतयो धरां किं व्यधुः
कया सदसि कस्त्वया वद जितोम्बुधिः कीदृशः ॥११॥
कुम्भीरमीनमकरागमदुर्गवारि॥इतिपादोत्तरजा

चत्वार्य्यराणि पादाभ्यां नेमिं पादद्वयेन च।
लिखित्वा दक्षिणावर्त्तं चक्रं प्रश्नमवेहि मे ॥१२॥
कश्चौरस्यच्छिनत्तिक्षितिपतिरनघः किं पदं वल्लिकुत्सा
क्षौणीसम्बोधनं किंवदति कमलभूः काचविश्वं विभर्त्ति।
चक्रांगामन्त्रणं किं कथमपि सुजनः किं नकर्याद्दनार्य्यं
कीदृग्भोक्तुः पुरंस्यात्यवसिवद्कुतोमीनपंक्तिर्बिभेति॥१३
किं स्वच्छं शारदं स्याद्वदति वृषगतिः कोंशुमालीपवित्र
कोस्मिन्किं जीवनंकांविरचयतिकविर्वह्निसम्बोधनंकिं
नाकां चन्ति स्त्रियः कंतनुरसुररिपोः कीदृशीकस्यमूकः
सख्यक् प्रीतिन्तडागः प्रियतमतनुते कीदृशः कीदृशस्ते॥
करङ्ककोककुररकलहंसकरम्बितः। [१४॥
सरोजकोमलोद्गारनीरसंसक्तमारुतः॥१५॥चक्रजातिः॥
वर्णद्वयद्वयैकैकदलभूतदलाष्टकम्।
सर्वोत्तराद्यवर्णेन पद्मं स्यात् क्षतकर्णिकम् ॥१६॥
पुण्यात्मा वद कीदृशः सरसिजैः के मोदिता कीदृशस्
तद्वैरीगतचक्षुषः कुलमभूत्कीदृक् तया के जिताः।
बद्धालिः सलिलाशयः कथय भोः कीदृक् चमूक्षेपवाक्
शब्दः क्वत्र न तस्करादिकभयं दत्ते भवेत्प्रायशः ॥१७॥
अप्यक्तं गवि कीदृशं निगदितो मुक्तः पुमान्कीदृशः
कस्माद्बिभ्यति कौशिका भुवि कृतः कीदृक् त्वयातस्करः
हस्ती स्यान्ननु कीदृशो बहुमतः शाच्यो रणः कीदृशः
कीदृक्जः पुरुषः पराप्रतिहतः कीदृग्भवेद्वासुकिः ॥१८॥

अलयः अपश्यत् अबन्धः अहस्तः अमजः अहीनः ॥

इति पद्मजातिः ॥

काकस्येव पदं न्यस्तं यत्तत्काकपदं मतम् ।
तिर्य्यगन्योन्यरेखाभिर्गोमूत्री द्विपदीद्वये ॥१६॥

कुतः कः स्यात्कीदृक् कथय विषवैद्य स्फुटमिदं
रिपोः कः कीदृक्षो भवति वद्गगः कश्च करभः ।
प्रवीणः सम्बोध्यः सुभग वद कौ रत्नवचनौ
सुरूपे विख्यातिं जगति महती का गतवती ॥२०॥

नागदरतः॥नागतनयः॥नागरमणी ॥काकपदजातिः॥

कामाङ्कुर्युवतीमनङ्गलवती कीदृग्गृहाणां गतिः
सम्बोध्या वत मत्स्यवेधनधरः कीदृग् भवेत्पामरः ।
कीदृग्वाल्मिकिवेश्म कोऽस्तनमुरोधन्ते सुरैरुच्यते
गौः कीदृङ्नकदापि कम्बुरहितं वाञ्छन्ति कं योषितः
कीदृक् पान्थकुलं ममोहरति का किञ्चक्रसम्बोधनं
रथ्या चम्पकशाखिनां कथय का कश्चाटजर्थं भवेत् ।
किं चिह्नं वलिवैरिणा मुररिपोः वाह्वा श्मशानेऽस्ति का
स्या कीदृग् भवति स्म पूर्वमधुना कीदृक् पुनर्वर्त्तते ॥

अजरासमशुभाचारवलिभीलविनोदिता ।
भुजङ्गमनिभासारकलिकालजनोचिता ॥

गोमूत्रजातिः ।२३॥

वर्णैनैकेन वा द्वाभ्यां सर्वैर्वा सर्वदिग्गतेः ।
उत्तरैः सर्वतो भद्रं दुष्करं तदिदं यथा ॥२४॥

कस्त्यागेधातुवक्तास्तव रिपुहृदि कामूपश के स्तनानां।
कोदु:खीकस्य शब्दो वदति वद शुचक्रौरिपुख्यातवीर्य्यैं
शृङ्गारी कीदृश:का रणशिरसिभयाद्भङ्गमाप्नोतिसेना
कोदानार्थोभिधायीशिरसिशिरसिकोयुध्यत:सम्प्रहृत्य
कीदृक्कोयार्थिनी स्त्रोभवति मधुकर:प्रायश:कोदुराख्ये
कस्मिन्मन्दायतेऽसौ नियतमुडुपति: प्रेयसीकामुरारे:
विख्यातौवाहनौकौद्विजगणमुरभिदो: कीदृगाखेटकस्त्री
कीदृङ्कैत्राचिराभा समितिगतभया: के गतौकस्यभ्रातृ:
हारावी॥ इति सर्वतोभद्रजाति:॥

प्रतिलोमानुलोमाभ्यामुत्तरेण गतागतम् ।
मध्यवर्णविलोपेन तच्चानेकप्रकारकम् ॥२७॥

वद वल्लभ सर्वत्र साधुर्भवति कीदृश: गोविन्दे
नानसिच्चिप्ते नन्दवेश्मनि काभवत् ॥२८॥दीनरक्षी॥

यत्नादन्विष्य का ग्राह्या लेखकैर्मसिमल्लिका।
घनान्धकारनि:शङ्कं मोदते केन बन्धकी॥२९॥
नारिकेरजा॥

चतुरसुरनरेन्द्रैरुच्यते का शिरोभिम्
तनुरपि शुचिवक्त्रे कोतिविस्तारमेति।
वदति कमलयोनि: सेव्यते केन पुष्पं
मधुरमसृणवल्ली का भवेदुत्पलस्य ॥३०॥
हिमांशुखण्डं कुटिलोज्ज्वलप्रभं
भवेद्वराहप्रवरस्य कीदृशम् ।

विहाय वर्णं पदमध्यसंस्थितं
न किं करोत्येव जिनः करोति किम् ॥३१॥ दंष्ट्राभम् ॥
वसन्तमासाद्य वनेषु कीदृशाः
पिकेन राजन्ति रसालभूरुहाः ।
निरस्य वर्णद्वयमल मध्यमं
तव द्विषां कान्तरतमा तिथिश्च का ॥३२॥
कान्तगिरा ॥ गतप्रत्यागतजातिः ।
आदौ मध्ये तथान्ते वा वर्धन्ते वर्णजातयः ।
एकद्वित्रादयो यत्र वर्द्धमानाक्षरं हि तत् ॥३३॥
किमनन्ततया ख्यातं पादेन व्यङ्गमाह्वय ।
जनानां लोचनानन्दङ्के तन्वन्ति घनात्यये ॥३४॥
उरःस्थलं कोऽत्र विना पयोधरं [खञ्जनाः ॥
बिभर्त्ति सम्बोधय मारुताशनम् ।
वदन्ति कं पत्तनसम्भवं जना
फलञ्च किं गौडवधूकुचोपमम् ॥३५॥ नागरङ्गम् ॥
प्रायेण नीचलोकस्य कः करोतीह गर्वताम् ।
आदौ वर्णद्वयं दत्वा ब्रूहि के वनवासिनः ॥३६॥ धवम
सानुजः काननङ्गत्वा नैकषेयान् जघान कः ।
मध्ये वर्णत्रयं दत्वा रावणः कीदृशो वद ॥३७॥ राजसोत्त
धत्ते वियोगिनी गण्डस्थलपाण्डुफलानि का ।
वद वर्णौ विधायान्ते भीता दृष्टा कयाभवत् ॥३८॥
विष्णोः का वल्लभा देवी लोकत्रितयपावनी । लवली

वर्णमाद्यं तयोर्दत्त्वा कः शब्दस्तुल्यवाग्वद ॥३९॥ समान ॥
इति वर्द्धमानाक्षरजातिः ॥

आदितो मध्यतोऽन्ताद्वा हीयन्ते वर्णजातयः ।
एकद्वित्वादयो यत्र हीयमानाक्षरं हि तत् ॥४०॥

वसन्तमासाद्य विकासि राजते
वनेषु किं वल्लभ पुष्पमुच्यताम् ।
विहङ्गमं कञ्च परिस्फुटाक्षरं
वदन्ति कम्पकजसम्भवं विदुः ॥४१॥ किंशुकम् ॥

समुद्यते कुत्र नयान्ति पांसुलाः
समुद्यते कुत्र भयं भवेज्जलात् ।
समुद्यते कुत्र तवापयात्यरिः
प्रहीनसम्बोधनवाचि किं पदम् ॥४२॥ हिमकरे ॥

तपस्विनोऽत्यन्तमहासुखाशया
वनेषु कस्मै स्पृहयन्ति सत्तमाः ।
इहाद्यवर्णं द्वितयं निरस्य भोः
सदा स्थितं कुत्र च सत्त्वमुच्यताम् ॥४३॥ तपसे ॥

पुरुषः कोदृशो वेत्ति प्रायेण सकलाः कलाः ।
मध्यवर्णद्वयं त्यक्त्वा ब्रूहि कः स्यात्सुरालयः ॥४४॥

यजमानेन कः स्वर्गहेतोः सम्यग्विचार्य्यते । नागरिक
विहायाद्यंतयोर्वर्णौ गोत्वं कुत्र स्थितं वद ॥४५॥
यागविधिः ॥ हीयमानाक्षरजातिः ॥

अन्योन्याक्षरवर्त्तिन्या चैकान्तरितयाथवा ।

शृङ्खलाबन्ध इत्युक्तो ग्रन्थिमान्नागपाशकः ॥४६॥

पवित्रमतिरत्रिकृत् किमिह किं भटामन्त्रणं
ब्रवीति धरणीधरस्तु किमजीर्ण सम्बोधनम्।
हरिर्वदति को जितो मदनवैरिणा संयुगे
तनोति तनु कः शिखण्डिकुलताण्डवाडम्बरम् ॥४७॥

पयोधरसमयः ॥

भवति जयिनी काजौ सेनाह्वयाधरभूषण
वहति किमहिः पुष्पं कीदृक् कुसुमसमुद्भवम्।
महति समरे वैरी वीर त्वया वद किं हतः
कमलमुकुले भृङ्गः कीदृक् पिबन्मधु राजते ॥४८॥

परागरञ्जितः ॥ शृङ्खलाजातिः ॥

आह्वानं किं भवति हि तरोः कस्यचित् प्रश्नविज्ञाः
प्रायः कार्य्यं किमपि न कुतो कुर्वते के परेषाम्।
पूर्णं चन्द्रं वहति ननु का पृच्छति म्लानचक्षुः
केनोदन्या जनितमसमं कष्टमाप्नोति लोकः ॥४९॥

नीरापकारेण ॥

का सम्बुद्धिः सुभट भवतो ब्रूहि पृच्छामि सम्यक्
प्रातः कीदृग्भवति विपिनं सम्प्रदृष्टैर्विहङ्गैः।
लोकः कस्मिन् प्रथयति मुदं का त्वदीया च जैली
प्रायो लोके स्थितमिह सुखं जन्तुना कीदृशेन ॥५०॥

वीहारसेविना ॥ एकान्तरितशृङ्खलाजातिः ॥

गोष्ठी विदग्धजनवत्यपि शोचनी या

कीदृक् भवेत्तरणिरश्मिषु का सदास्ति ।
दुर्वारदर्पदलितामरनायकापि
कीदृश्यकारि सुरशत्रुचमूशुम्हेन ॥५१॥
तारकविरहिता ॥
कीदृक् परैरपहृतो भवति क्षितीशः
इच्छत्यनुव्रदृह किं विदितं पवित्रम् ।
विच्छिन्नपाणिचरणो जनको यदीयः
कीदृक् परैरभिहितः स पुमान् पुनः स्यात् ॥५२॥
व्यङ्गतनयः ॥ नागपाशजातिः ॥
भाषाभिस्त्रिवितं यत् स्यात्संस्कृतप्राकृतादिभिः ।
सन्तस्त्रिवन्तदिच्छन्ति संशुद्धं त्वेकभाषया ॥५३॥
किं न स्यात्कीदृक्वं महतोपिच तादृशस्य जलराशेः ।
दिनअरकिरणफंसण पडिउद्धं होइ किं गोवे ॥५४॥
कमलवणम् ॥
मत्सरहितमम्बु कीदृक् इच्छति रोगी निशासु किंभाति।
कोऽनङ्गो वट्टति ख्गः खे गच्छइ केरिसा रइणा ॥५५॥
अविसामममिरेण ॥ संस्कृतप्राकृतजातिः ॥
प्रायो विश्यति कीदृशा दरिगजाहन्तप्रवीणा गजाः
पृथ्वीसम्प्रति कीदृशी नृपतिना राजन्वती राजते ।
प्रायः प्रावृषि कीदृशी गिरितटी धत्ते च कः कज्जले
मज्जणवल्लिये घणाच्चयदिणे जादं सरो केरिसं ॥५६॥
सरदादवतावितवाहिरम् ॥

वृत्तं कीदृशमङ्गं दन्तभवं कं वदन्ति विद्वांसः।
अतिलघुवाचि पदं किं केरिसुः सुअणेसु होइ जणो॥
विसन्तमणु॥ इति संस्कृतापभ्रंशजातिः॥
किं सुखमाङ्गः प्रायः केशविकारश्च का हरेर्दयिता।
कथमाभा कस्मिन्निशि को लुब्भइ वीरपुलिसाणं॥५८
शमलकमालम्भे॥
वल्लवेरमसुत इति विख्यातः पृच्छति स्फुटं हरिणः।
अहिणवण अलीरणो असाङ्गणो केण उज्जलइ॥५९
कलभएण॥ संस्कृतमागधिकम्॥
कोपारुणं किमकरणाग्रसरस्य पूर्वं
काष्ठाग्रनिष्ठिततनोरुपमानपात्रम्।
पत्तं खणेण मरणं सअरः सरणं
पुत्तेहि किं पविसिउण तुरङ्गमत्थं॥६०॥कपिलपणम्
कं प्रीणयन्ति जलदाः सैन्यं कीदृक् पलायते समरा
धत्ते शिरोधरा किं कइसिरं केरिसम्भोदि॥६१॥
चातकं कातरङ्कम्॥ संस्कृतपैशाचिकम्॥
को वर्णाद्यः क्व च जलधिसुता कश्च दीर्घादिसंज्ञं
प्राङ्वृद्धाः कमजयदसौ तार्किकैः के क्रियन्ते।
आमन्त्र्यो विः कथय विदितं किं पदं हेतुवाचि
जाणश्चेडं मइह महिला साविसेोक्खेइ कीसे॥६२
अरोचम्मारं वाढावेहि॥
शब्दः कः स्यात्कपवचनं कुण्डलौ कौ खरारेः

कामक्रोधैर्हरिरदहरद्वीवधः पृच्छतीदम् ।

हण्डी कुण्डी अण्णसिण्णवरे कीस अम्हारअत्थं

ये पुच्छिल्ला सव्वणपरिहाकत्तरं कीसदेइ ॥६३॥

नाहीकुम्भार ॥ संस्कृतलौकिकं इति चित्रजातिः ॥

को निवसइ सच्छन्दं सुन्दरि गिरिगहणुन्नमज्झम्मि ।

सह अज्जणेण योद्धुं सिहि समणो केरिसो होइ॥६४॥

सरहससवराहवग्गो ॥

काहरइ मणं पइणो गुणगण जोवण सलाहणिज्जाण।

कअचडचडेति सद्दाउआ सना केरिसा होन्ति॥६५॥

सरिसवज्जुआ ॥ इति शुद्धप्राकृतम् ॥

पाणिगाहणाणि अंसणुसोइह केहि मण्डिअं

साहसु वज्जवीर पइणो रिउवलं केहिं खण्डिअं॥६६॥

समरङ्गणेहिं ॥

रसिअज्ज केण उव्वाढण, किज्जइ

जुअइ भाणसु केण उविज्जइ ।

तिसिअलोअ खण, केण सुहिगाइ

एज्जपज्ज मम भुअणे गिज्झइ ॥६७॥

नीरसराएण ॥ शुद्धापभ्रंशम् ॥

सुअलो मेहं पुच्छइ पुच्छइ मेहोवि तन्तहा सुअलं ।

केणह आसअलसुआ केण जणो विसइ पाआजं॥६८॥

बलाहककविलेन ॥

धवलुज्जलेहिं केहिसोइह धलणी ममाण देसस ।

णिलअसर कवनाला केहिं पलिवेटि आह्लोन्ति॥६९॥
णलकलकेहिं॥ शुद्धमागधिकं॥
वैरी पुच्छइ कवणो गोचइ कसणो भणो केहिं।
सम्वाइणकेहिं समत्थन्ति सम्वंणि हितं कता इम्मि॥७०॥
अहितपकवेहिं॥
पत्तूण किं भड चणो णिधणो हताणं
अट्टासणं फचति चंफणि हूअणस भोत्तूण।
खोरतर दुक्खस आइ पावामोहं
धआकरणं लप किं लहन्ति॥७१॥
विसमरणं॥ शुद्धपैशाचिकम्॥
जाणो आणइ णिं भेद्दे भलि
साकिसवुम्बइ वोल्लेरे सम्भरि।
जोतिलसरिस वपीडयि जाणी
कीस भणीज्जइ सोविद्माणी॥७२॥
सुतेक्षीशुद्धलौकिकम्॥ इति संशुद्धजातिः॥
एतावतापि दिङ्मात्रं प्रश्नानां दर्शितं मया।
येन येन हि माद्यन्ति तद्विदस्तत्तदूह्यताम्॥७३॥
इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
तृतीयः परिच्छेदः॥

—•◎•—

व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात्।
यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका॥१॥

कुम्भेन सुप्रीनयनाश्रयास दग्धोन्मदाद्दुरहर्षकाले।
स्वजन्मभक्तप्रियभोजनाशानृत्यन्तिभीमानुजगोजभाज:॥
इत्यजमारादिगूढजाति:॥
वाताच्छीतिररिर्धोरं बोहरतान्महासुरोदयित:।
वीड्बाह्यानौकावावोहाभोसमस्ताना:॥१६॥
इति पदगूढजाति:॥
दयावान् प्रयत: शुद्ध: प्रबुद्धकमलेक्षण:।
पापापहस्त्रिभुवनं बुद्ध: पायादप्रायत:॥१७॥
न सज्जति क्वचिद्दोषे प्रीणाति जगतां मन:।
य एक: स परं धीमांश्चिरं जयति सज्जन:॥१८॥
इति पादगूढजाति:॥
दृष्टो मया सखि ब्रूहि रोदयित्वा गतोद्यमां।
भद्रे कल्याणिनी भूया: प्राचीं पश्यातिनिर्मलां॥१९॥
डाहिणपवणु विग्गासंमीलइ लोअणाइ पहि अवह्ला।
णिउण सही उणतीएक:सेविवरे ढक्के इटं॥२०॥
अर्थगूढजाति:॥
स्तुतिनिन्दा तदर्थत्वाद्द्व्यर्थमर्थद्वयोदयात्।
निह्नवात्कथितस्यापि शब्दव्याजादपह्नुति:॥२१॥
बहुदोषो गुणध्वंसी गोहन्ता जनपीडक:।
करोतु विरथो लोकमस्तमाप्तमहोदयम्॥२२॥
विष्णो: स्तुतिनिन्दे॥
सततमहितजनवत्सलबहुभयपापक्रियापरिभ्रष्ट:।

इह कलिकाले कुपतिर्जगतस्त्वं परमदुःखकरः ॥२३॥

राज्ञः स्तुतिनिन्दे ॥ इति स्तुतिनिन्दाजातिः ॥

प्रसन्नवदनः श्रीमानयं लब्धगुणोदयः ।
करप्रचारसुभगो राजा नन्दयति प्रजाः ॥२४॥

चन्द्रभूपती ॥

विनायकाहितप्रीतिर्देवो गङ्गां बभार यः ।
सर्वदा माधवः सत्वामव्याद्व्यर्थविक्रमः ॥२५॥

शङ्करवासुदेवौ ॥ इत्यर्थजातिः ॥

शीत्कारं जनयतिव्रणयत्यधरं तनोति रोमांचं ।[वनः
नागरिकः किमु मिलितो नहि नहि सखि हैमनः प
रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
तत्किं तरुणी नहि नहि वाणी बाणस्य मधुरशीलस्य

अपह्नुतिजातिः ॥

स्वरेषु बिन्दुयुक्तेषु हलां यदवबोधनम् ।
तद्विंदुमदिति प्राज्ञः केचिद्विंदुमतीमिति ॥२८॥

मानसी नाभसीत्याद्याः बुध्यादौ न्यासतो हि याः ।
बाहुल्येनाप्रयोगात्तु नेह तासां प्रदर्शनम् ॥२९॥

त्रिनयनचूडारत्नं मित्रं सिन्धोः कुमुद्वतीदयितः ।
अयमुदयति घुसृणारुणरमणीवदनोपमश्चन्द्रः ॥३०॥

इति बिन्दुमज्जातिः ॥

क्रियादिकं पदे यत्र पदसाधनकौशलात् ।
स्फुटं न लक्ष्यते तत्स्यात् क्रियागुप्तादिकं यथा ॥३१॥

राजन्नव घनश्याम निस्त्रिंशाकर्षदुर्जय ।
सा द्विधार्थी च शाब्दी च विख्याता प्रसन्नशासने ।
आर्थी स्यादर्थविज्ञानाच्छाब्दी शब्दविभागतः ॥२॥
तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः ।
गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ॥३॥
पानीयकुम्भः ॥
अपाण्डु पीनकठिनं वर्त्तुलं सुमनोहरम् ।
करैराकृष्यतेऽत्यर्थं किं दृष्ट्वैरपि स्पृहम् ॥ ४ ॥
पक्वबिल्वफलम् ॥ इत्यार्थीजातिः ॥
दुर्वीरवीर्य्य सरूषि त्वयि का प्रसुप्ता
श्यामा सपत्नहृदये सुपयोधरा च ।
तुष्टे पुनः प्रणतशत्रुसरोजसूर्ये
सैवाद्यवर्णरहिता वद नाम का स्यात् ॥५॥ यष्टी ॥
सदारिमध्यापि न वैरियुक्ता
नितान्तरक्तापि सितैव नित्यं ।
यथोक्तवादिन्यपि नैव दूतिका
का नाम कान्तेति निवेदयाशु ॥६॥
सारिका ॥ शाब्दीजातिः ॥
नीरस आउण सो बहुगुणवन्तउ भमइ
निरन्तरणीझलहोन्तउ ।
तरुणिज्जइ गउण फलुपत्तु सस्
योपरि आणइ पावइ सोविजसु ॥७॥ गुणरुकेवा ॥

घरघर चलइ सअलपि खारी
जीवन्ति होइ वैरिणो णारी ।
खावन्धइ खण मुन्चइ खण एकल्ली
तह्रजाणह जह जाइ णपेल्ली ॥८॥
पाशासारी ॥ इति प्रहेलिकाजातिः ॥
कालसारादिकं हृद्यमजमरादिगूढकम् ।
विदग्धा दुर्विदग्धानां कुर्वते दर्पशान्तये ॥९॥
अनुनेतुं मानिन्या दयितश्शरणे सरागचरणायाः ।
यावत्पतितः स तया तत्चणमवधीरितः कस्मात् ॥१०॥
रजस्वला यतः ॥
अवलोक्य स्तनौ बध्वा गुञ्जाफलविभूषितौ ।
निःश्वस्य रोदितुं लग्ना कुतो व्याधकुटुम्बिनी ॥११॥
असारस्तनयो यतः ॥ कालसारजातिः ॥
दरदिवुचूअमउलं पिच्छि असहि
आरा विरहिणीं सहियम् ।
णमिओकं केलितरु चूआचलणाह ओकतो ॥१२॥
पिच्छंत मणिमिसच्छ पिच्छि
अवज्झआए भत्तिभिरक् वअरं ।
दंसिअकआइ सीसे
कतोदोजाइ कुसुमाइ ॥१३॥
इति कालसारादिहृद्यजातिः ॥
रविसुतकृतगोकर्णः श्रुतिविषयगुणांवरो वनात्मधरः

राजन्नव घनश्याम निस्त्रिंशाकर्षदुर्जय ।
आकल्पं वसुधामेतां विद्विषो द्य रणे बहून् ॥३२॥
पुंस्कोकिलकुलस्यैते नितान्तं मधुरारवैः ।
सहकारद्रुमाख्यां वसन्ते कामपि श्रियम् ॥३३॥

इति क्रियागुप्तजातिः ॥

न करोतु नाम रोषं न वदतु परुषं नहन्तु वा शत्रून्।
रञ्जयति महीमखिलां तथापि धीरस्य वीरस्य ॥३४॥
शरदिंदुकुन्दधवलं नगनिलयरतं मनोहरन्देवं ।
यैः सुरतं कृतमपि सन्तोषामेव प्रसादयति ॥३५॥

कर्तृगुप्तम् ॥

शीत्कारासारसं वाही सरोजवनमारुतः ।
प्रक्षोभयति पांथस्त्री निश्वासैरिव मांसलः ॥३६॥
सुभगतवाननपङ्कजदर्शनसञ्जातनिर्भरप्रीतेः ।
शमयति कुर्वन् दिवसः पुण्यवतःकस्य रमणीयः॥३७॥

कर्मगुप्तम् ॥

पूतिपङ्कमयेऽत्यर्थं कासारे दुःखिता अमी ।
दुर्वारा मानसं हंसाः गमिष्यन्ति घनागमे ॥३८॥
अहं महानसायातः कल्पितो नरकस्तव ।
मया मांसादिकं भुक्तं भीमं जानीहि मां वक ॥३९॥

करणगुप्तम् ॥

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी ।
ददाति भक्तिसम्पन्ना पुष्पं सौभाग्यकामया ॥४०॥

अन्यस्त्यायुक्तमार्गस्य तव संमानिताश्रिताः ।
स्पृहयन्ति न के नाम गुणरत्नालय प्रभो ॥४१॥

सम्प्रदानगुप्तम् ॥

शिलीमुखैस्त्वया वीर दुर्वारैर्निर्जितो रिपुः ।
बिभेत्यत्यन्तमलिनोः वनेपि कुसुमाकुले ॥४२॥

सरसीतोयमुद्धृत्य जनः कन्दर्पकारकम् ।
पिबत्यंभोजसुरभिस्वच्छमेकान्तशीतलम् ॥४३॥

अपादानगुप्तम् ॥

या कटाक्षच्छटापातैः पवित्रयति मानवम् ।
एकान्तरोपितप्रीतिरस्ति सा कमलालया ॥४४॥

विपद्यमानता सिद्धा सर्वस्यैव निरक्षणः ।
तथाहि भस्मपादाभ्यां निर्वाणं हंत्ययं जनः ॥४५॥

अधिकरणगुप्तम् ॥ कारकगुप्तजातिः ॥

तूणीव मधुमासेस्मिन् रसालद्रुममञ्जरी ।
द्रुयमुद्भिन्नमुकुलैः भाति न्यस्तशिलीमुखा ॥४६॥

प्राप्तमदो मधुमासः प्रबलारुक् प्रियतमो विदूरस्थः ।
असतीयं सन्निहिता हा हतशीला सखी नियतं॥४७॥

सम्बन्धगुप्तजातिः ॥

सर्वज्ञेन त्वया किञ्चिन्नास्त्यविज्ञातमीदृशम् ।
मिथ्या वचस्तथा हि त्वमसत्यं वेत्सि न क्वचित् ॥४८॥

कमले कमले नित्यं मधूनि पिबतस्तव ।
भविष्यति न सन्देहः कष्टं दोषाकरोदये ॥४९॥

आमन्त्रितगुप्तजातिः॥

विषादी मैत्र्यमश्नाति सदारोगं न मुञ्चति।
कष्टेनापि त्वया वीर शम्भुनारिः समः कृतः॥५०॥

नित्यमाराधिता देवैः कंसस्य द्विषतस्तनुः।
मण्डलाग्रं गदां शङ्खं चक्रं जयति बिभ्रती॥५१॥

समासगुप्तजातिः॥

नितान्तस्वच्छहृदयं सखि प्रेयान् समागतः।
त्वां चिरादर्शनप्रीत्या यः समालिङ्ग्य रंस्यते॥५२॥

कलिकालमियन्तावदगस्त्यस्य मुनेरपि।
मानसं खण्डयत्यत्र शशिखण्डानुकारिणी॥५३॥

लिङ्गगुप्तजातिः॥

प्रमोदं जनयन्त्येव सदाराः गृहमेधिनः।
यदि धर्म्मश्च कामश्च भवेतां सङ्गताबुभौ॥५४॥

सुब्वचनगुप्तम्॥

कस्मात्त्वं दुर्बलासीति सख्यस्त्वां परिपृच्छति।
त्वयि सन्निहिते तासु दद्यात् किं कथयोत्तरम्॥५५॥

लिङ्गवचनगुप्तम्॥ वचनगुप्तजातिः॥

अन्योप्यर्थः स्फुटो यत्र मात्रादिच्युतकेष्वपि।
प्रतीयते विदुस्तज्ज्ञास्तन्मात्राच्युतकादिकम्॥५६॥

महाशयमतिस्वच्छं नीरं सन्तापशान्तये।
खलावासादतिश्रान्ताः समाश्रयत हे जनाः॥५७॥

तुषारधवलः स्फुरन्महासमणिधरोऽनघः।

नागराजो जयत्येकः पृथिवीधरणक्षमः ॥५८॥

मात्राच्युतकजातिः ॥

सुश्यामा चन्दनवती कान्ता तिलकभूषिता ।
कस्यैषा नगभूः प्रीतिं भुजङ्गस्य करोति न ॥५९॥

यथा सत्प्रसवः स्निग्धः सन्मार्गविहितस्थितः ।
तथा सर्वाश्रयः सत्यमयमेव कुलद्रुमः ॥६०॥

बिंदुच्युतकजातिः ॥

महीरुहो विहङ्गानामेते हृद्यैः कलापिनाम् ।
विरुतैः स्वागतानीव नीरवाहाय कुर्वते ॥६१॥

अगस्त्यस्य मुनेः शापाद्ब्रह्मस्यन्दनमाश्रितः ।
महासुखात्परिभ्रष्टो नहुषः सर्पतां गतः ॥६२॥

विसर्गच्युतकजातिः ॥

महानपि सुधीरोपि बहुरत्नयुतोपि सन् ।
विरसः कुपरीवारः नदीनः केन सेव्यते ॥६३॥

सुशीलः स्वर्णगौराभः पूर्णचन्द्रनिभाननः ।
सुगतः कस्य न प्रीतिं तनोति हृदि संस्थितः ॥६४॥

अक्षरच्युतकजातिः ॥

तनोतु ते यस्य फणि गरुत्मान्
पाणौ मुरारिर्दयिता च शय्या ।
नाभ्यां स्फुरन् भद्र दमशुभ्रदेहः
पद्मा गतिश्चक्रमसौ विरिञ्चिः ॥६५॥

हरः चयो तापकरः सुरेशः

शान्तो हरिर्गौर्वरिपुर्विवस्वान्।
चन्द्रो द्विजिह्वाश्रित इत्युपेक्ष्य
लक्ष्म्या वृतः पातु विधिर्जगन्ति ॥६६॥

स्थानच्युतकजातिः॥

भिक्षवो रुचिराः सर्वे सुरसाश्च जनप्रिया।
क्षमायामतिसम्पन्ना दृश्यन्ते मगधे परम्॥६७॥
सत्यशीलो दयोपेतो दाता शुचिरमत्सरः।
जिनः सर्वात्मना सेव्यः पदमुच्चैरभीप्सिता॥६८॥

व्यञ्जनच्युतजातिः॥

स्फोटयित्वाक्षरं किञ्चित्पुनरन्यस्य दानतः।
यत्नापरो भवेदर्थस्तु तद्दत्ताक्षरं हि तत्॥६६॥
सदागतिहतोच्छ्रायस्तमसो वशतां गतः।
अस्तमेष्यति दीनोयं विधुरेकः शिवं स्थितः॥७०॥
पूर्णचन्द्रमुखी रम्या कामिनी निर्मलाम्बरा।
करोति कस्य न स्वान्तमेकान्तमदनोत्तरम्॥७१॥

इति च्युतदत्ताक्षरजातिः॥

इति श्रीधर्मदासविरचिते विदग्धमुखमण्डने
चतुर्थः परिच्छेदः॥

समाप्तः॥

नानाशास्त्रोद्धृतं वक्ष्ये राजनीतिसमुच्चयम् ।
सर्वबीजमिदं शास्त्रं चाणक्यं सारसंग्रहम् ॥१॥
मूलसूत्रं प्रवक्ष्यामि चाणक्येन यथोदितम् ।
यस्य विज्ञानमात्रेण मूर्खो भवति पण्डितः ॥२॥
विद्वत्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥३॥
पण्डिते च गुणाः सर्वे मूर्खे दोषा हि केवलम् ।
तस्मान्मूर्खसहस्रेषु प्राज्ञ एको विशिष्यते ॥४॥
मातृवत् परदारेषु परद्रव्येषु लोष्ट्रवत् ।
आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ॥५॥
किं कुलेन विशालेन गुणहीनस्तु यो नरः ।
अकुलीनोऽपि शास्त्रज्ञो दैवतैरपि पूज्यते ॥६॥
रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥७॥
नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः ।
पृथिवीभूषणं राजा विद्या सर्वस्य भूषणम् ॥८॥
माता शत्रुः पिता वैरी येन बालो न पाठितः ।
सभामध्ये न शोभन्ते हंसमध्ये बको यथा ॥९॥

वरमेको गुणी पुत्रो नच मूर्खशतैरपि ।
एकश्चन्द्रस्तमो हन्ति नच तारागणैरपि ॥१०॥
लालयेत् पञ्चवर्षाणि दश वर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥११॥
लालने बहवो दोषास्ताडने बहवो गुणाः ।
तस्मात्पुत्रञ्च शिष्यञ्च ताडयेन्नतु लालयेत् ॥१२॥
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥१३॥
एकेनापि कुवृक्षेण कोटरस्थेन वह्निना ।
दह्यते तद्वनं सर्वं कुपुत्रेण कुलं यथा ॥१४॥
दूरतः शोभते मूर्खो लम्बशाटपटावृतः ।
तावच्च शोभते मूर्खो यावत् किञ्चिन्न भाषते ॥१५॥
विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥१६॥
उत्सवे व्यसने चैव दुर्भिक्षे शत्रुविग्रहे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥१७॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्ज्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥१८॥
सकृद्दुष्टञ्च मित्रं यः पुनः सन्धातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥१९॥
न विश्वसेदविश्वस्तं मित्रञ्चापि न विश्वसेत् ।
कदाचित्कुपितं मित्रं सर्वदोषं प्रकाशयेत् ॥२०॥

जानीयात्प्रेषणे भृत्यान् बान्धवान् व्यसनागमे।
मित्रञ्चापदि काले च भार्य्याञ्च विभवक्षये ॥२१॥
उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत्।
पादलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥२२॥
न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः।
कारणेन हि जानाति मित्राणि च रिपुंस्तथा ॥२३॥
दुर्ज्जनः प्रियवादी च नैतद्विश्वासकारणम्।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम् ॥२४॥
दुर्ज्जनः परिहर्त्तव्यो विद्ययालङ्कृतोऽपि सः।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥२५॥
सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः।
मन्त्रौषधिवशः सर्पः खलः केन निवार्य्यते ॥२६॥
नखिनाञ्च नदीनांच शृङ्गिणां शस्त्रपाणिनां।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च ॥२७॥
हस्ती हस्तसहस्रेण शतहस्तेन वाजिनः।
शृङ्गिणो दशहस्तेन स्थानत्यागेन दुर्ज्जनः ॥२८॥
आपदर्थं धनं रक्षेत् दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥२९॥
परदारं परद्रव्यं परीवादं परस्य च।
परीहासं गुरोः स्थाने चापल्यञ्च विवर्जयेत् ॥३०॥
त्यजेदेकङ्कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥३१॥

चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।
नासमीक्ष्य परं स्थानं पूर्व्वमायतनं त्यजेत् ॥३२॥
लुब्धमर्थेन गृह्णीयात् क्रुद्धमञ्जलिकर्म्मणा ।
मूर्खं छन्दोनुवृत्तेन तथा तथ्येन पण्डितम् ॥३३॥
अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
वञ्चनञ्चापमानञ्च मतिमान् न प्रकाशयेत् ॥३४॥
धनधान्यप्रयोगेषु तथा विद्यागमेषु च ।
आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत् ॥३५॥
धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥३६॥
यस्मिन् देशे न सम्मानं न प्रीतिर्न च बान्धवाः ।
नच विद्यागमः कश्चित् तं देशं परिवर्जयेत् ॥३७॥
मनसा चिन्तितं कर्म वचसा न प्रकाशयेत् ।
अन्यलक्षितकार्य्यस्य यतः सिद्धिर्न जायते ॥३८॥
कुदेशञ्च कुवृत्तिञ्च कुभार्य्यां कुनदीं तथा ।
कुद्रव्यञ्च कुभोज्यञ्च वर्ज्जयेच्च विचक्षणः ॥३९॥
ऋणशेषोऽग्निशेषश्च व्याधिशेषस्तथैव च ।
पुनश्च वर्द्धते यस्मात्तस्मात् शेषं न कारयेत् ॥४०॥
चिन्ता ज्वरो मनुष्याणां वस्त्राणामातपो ज्वरः ।
असौभाग्यं ज्वरः स्त्रीणामश्वानां मैथुनं ज्वरः ॥४१॥
अस्ति पुत्रो वशे यस्य भृत्यो भार्य्या तथैव च ।
अभावे सति सन्तोषः स्वर्गस्थोऽसौ महीतले ॥४२॥

दुष्टा भार्य्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥४३॥
माता यस्य गृहे नास्ति भार्य्या चाप्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहं ॥४४॥
ऋणकर्त्ता पिता शत्रुर्माता च व्यभिचारिणी ।
भार्य्या रूपवती शत्रुः पुत्त्रः शत्रुरपण्डितः ॥४५॥
कोकिलानां स्वरो रूपं नारीरूपं पतिव्रता ।
विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनां ॥४६॥
अविद्याजीवनं शून्यं दिक्शून्या चेदबान्धवा ।
पुत्त्रहीनं गृहं शून्यं सर्वशून्या दरिद्रता ॥४७॥
अदाता वंशदोषेण कर्मदोषाद्दरिद्रता ।
उन्मादो मातृदोषेण पितृदोषेण मूर्खता ॥४८॥
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः ॥४९॥
अतिदर्पे हता लङ्का अतिमाने च कौरवाः ।
अतिदाने बलिर्बद्धः सर्व्वमत्यन्तगर्हितं ॥५०॥
वस्त्रहीनस्त्वलङ्कारो घृतहीनञ्च भोजनं ।
स्तनहीना च या नारी विद्याहीनञ्च जीवनं ॥५१॥
भोज्यं भोजनशक्तिश्च रतिशक्तिर्वराः स्त्रियः ।
विभवो दानशक्तिश्च नाल्पस्य तपसः फलं ॥५२॥
पुत्त्रप्रयोजना दाराः पुत्त्रः पिण्डप्रयोजनः ।
हितप्रयोजनं मित्रं धनं सर्वप्रयोजनं ॥५३॥

दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत् सुतः ।
दुर्लभा सदृशी भार्य्या दुर्लभः स्वजनः प्रियः ॥ ५४ ॥
शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो नहि सर्वत्र चन्दनन्न वने वने ॥ ५५ ॥
अशोच्यो निर्धनः प्राज्ञोऽशोच्यः पण्डितबान्धवः ।
अशोच्या विधवा नारी पुत्रपौत्रप्रतिष्ठिता ॥ ५६ ॥
अविद्यः पुरुषः शोच्य शोच्यं मैथुनमप्रजं ।
निराहाराः प्रजाः शोच्याः शोच्यं राज्यमराजकं ॥ ५७ ॥
कुलीनैः सह सम्पर्कं पण्डितैः सह मित्रतां ।
ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति ॥ ५८ ॥
कष्टा वृत्तिः पराधीना कष्टो वासो निराश्रयः ।
निर्धनो व्यवसायश्च सर्वकष्टा दरिद्रता ॥ ५९ ॥
तस्करस्य कुतो धर्मो दुर्जनस्य कुतः क्षमा ।
वेश्यानांच कुतः स्नेहः कुतः सत्यञ्च कामिनां ॥ ६० ॥
प्रेषितस्य कुतो मानं कोपनस्य कुतः सुखं ।
स्त्रीणां कुतः सतीत्वञ्च कुतो मैत्री खलस्य च ॥ ६१ ॥
दुर्बलस्य बलं राजा बालानां रोदनं बलं ।
बलं मूर्खस्य मौनीत्वं चौराणामनृतं बलं ॥ ६२ ॥
यो ध्रुवाणि परित्यज्य अध्रुवं परिषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ ६३ ॥
शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ ६४ ॥

सद्यो मांसं नवान्नञ्च बाला स्त्री क्षीरभोजनं ।
घृतमुष्णोदकञ्चैव सद्यः प्राणकराणि षट् ॥६५॥
सिंहादेकं वकादेकं षट् शुनास्त्रीणि गर्दभात् ।
वायसात्पञ्च शिक्षेच्च चत्वारि कुक्कुटादपि ॥६६॥
प्रभूतमल्पकार्य्यं वा यो नरः कर्त्तुमिच्छति ।
सर्वारम्भेन तत्कुर्य्यात् सिंहादेकं प्रकीर्त्तितं ॥६७॥
सर्वेन्द्रियाणि संयम्य वकवत् पण्डितो जनः ।
कालदेशोपपन्नानि सर्वकार्य्याणि साधयेत् ॥६८॥
बह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः ।
प्रभुभक्तश्च शूरश्च ज्ञातव्याः षट् शुनो गुणाः ॥६९॥
अविश्रामं वहेद्भारं शीतोष्णञ्च न विन्दति ।
ससन्तोषस्तथा नित्यं त्रीणि शिक्षेत गर्दभात् ॥७०॥
गुढमैथुनधर्म्मञ्च काले काले च संग्रहं ।
अप्रमादमनालस्यं चतुः शिक्षेत वायसात् ॥७१॥
युद्धञ्च प्रातरुत्थानं भोजनं सह बन्धुभिः ।
स्त्रियामापद्गतां रक्षेच्चतुः शिक्षेत कुक्कुटात् ॥७२॥
कोऽतिभारः समर्थानां किं दूरं व्यवसायिनां ।
को विदेशः सविद्यानां कः परः प्रियवादिनां ॥७३॥
आपदां कथितः पन्था इन्द्रियाणामसंयमः ।
तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यतां ॥७४॥
नच विद्यासमो बन्धुर्नच व्याधिसमो रिपुः ।
न चापत्यसमः स्नेहो नच दैवात् परं बलं ॥७५॥

समुद्रावरणा भूमिः प्राकारावरणं गृहं ।
नरेन्द्रावरणा देशाश्चरित्रावरणाः स्त्रियः ॥७६॥
घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान् ।
तस्मात् घृतञ्च वह्निञ्च नैकत्र स्थापयेद्बुधः ॥७७॥
आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥७८॥
जीर्णमन्नं प्रशंसीयात् भार्य्याञ्च गतयौवनां ।
रणात्प्रत्यागतं शूरं शस्यञ्च गृहमागतं ॥७६॥
असन्तुष्टा द्विजा नष्टाः सन्तुष्टा इव पार्थिवाः ।
सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः ॥८०॥
अवंशपतितो राजा मूर्खपुत्त्रश्च पण्डितः ।
अधनेन धनं प्राप्य तृणवन्मन्यते जगत् ॥८१॥
ब्रह्महापि नरः पूज्यो यस्यास्ति विपुलं धनं ।
शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते ॥८२॥
पुस्तकस्था तु या विद्या परहस्तगतं धनं ।
कार्य्यकाले समुत्पन्ने न सा विद्या न तद्धनं ॥८३॥
पादपानां भयं वातात् पद्मानां शिशिराद्भयं ।
पर्व्वतानां भयं वज्रात् साधूनां दुर्जनाद्भयं ॥८४॥
प्राज्ञे नियोज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः ।
यशः स्वर्गनिवासश्च विपुलश्च धनागमः ॥८५॥
मूर्खे नियोज्यमाने तु त्रयो दोषा महीपतेः ।
अयशश्चार्थनाशश्च नरके गमनं तथा ॥८६॥

बहुभिर्मूर्खसंघातैरन्योन्यपशुवृत्तिभिः ।
प्रच्छाद्यन्ते गुणाः सर्वे मेघैरिव दिवाकरः ॥८७॥
यस्य चैवं नदीतीरे भार्य्या वापि परप्रिया ।
पुत्त्रस्य विनयो नास्ति मृत्युरेव न संशयः ॥८८॥
असंभाव्यं न वक्तव्यं प्रत्यक्षमपि दृश्यते ।
शिला तरति पानीयं गीतं गायति वानरः ॥८९॥
सुभिक्षं कृषके नित्यं नित्यं सुखमरोगिणि ।
भार्य्या भर्त्तुः प्रिया यस्य तस्य नित्योत्सवं गृहं ॥९०॥
हेला स्यात् कार्य्यनाशाय बुद्धिनाशाय निर्धनं ।
याचना माननाशाय कुलनाशाय भोजनं ॥९१॥
सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।
यदि दैवात् फलं नास्ति छाया केन निवार्य्यते ॥९२॥
प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनं ।
तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ॥९३॥
नदीकुले च ये वृक्षाः परहस्तगतं धनं ।
कार्य्यं स्त्रीगोचरो यत्स्यात् सर्वं तद्विफलम्भवेत् ॥९४
कुदेशमासाद्य कुतोऽर्थसञ्चयः
कुपुत्त्रमासाद्य कुतो जलाञ्जलिः ।
कुगेहिनीं प्राप्य गृहे कुतः सुखं
कुशिष्यमध्यापयतः कुतो यशः ॥९५॥
कूपोदकं वटच्छाया श्यामा स्त्री चेष्टकालयं ।
शीतकाले भवेदुष्णं ग्रीष्मकाले च शीतलं ॥९६॥

विषं चंक्रमणं रात्रौ विषं राज्ञोऽनुकूलता ।
विषं स्त्रियोऽप्यन्यहृदो विषं व्याधिरवीक्षितः ॥९७॥
दुरधीता विषं विद्या अजीर्णे भोजनं विषं ।
विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषं ॥९८॥
प्रदोषे निहतः पन्थाः पतिता निहताः स्त्रियः ।
अल्पबीजं हतं क्षेत्रं भृत्यदोषाद् हतः प्रभुः ॥९९॥
हतमश्रोत्रियं श्राद्धं हतो यज्ञस्त्वदक्षिणः ।
हता रूपवती बन्ध्या हतं सैन्यमनायकं ॥१००॥
वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
आशीर्वादवचोयुक्त एष राजपुरोहितः ॥१०१॥
कुलशीलगुणोपेतः सर्व्वधर्मपरायणः ।
प्रवीणः प्रेषणाध्यक्षो धर्माध्यक्षो विधीयते ॥१०२॥
आयुर्वेदकृताभ्यासः सर्वेषां प्रियदर्शनः ।
आर्य्यशीलगुणोपेत एष वैद्यो विधीयते ॥१०३॥
सकृदुक्तगृहीतार्थो लघुहस्तो जिताक्षरः ।
सर्वशास्त्रसमालोकी प्रकृष्टो नामलेखकः ॥१०४॥
समस्तनीतिशास्त्रज्ञो वाहने पूजितश्रमः ।
शौर्य्यवीर्य्यगुणोपेतः सेनाध्यक्षो विधीयते ॥१०५॥
मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः ।
धीरो यथोक्तवादी च एष दूतो विधीयते ॥१०६॥
पुत्त्रपौत्त्रगुणोपेतः शास्त्रज्ञो मिष्टपाचकः ।
शूरश्च कठिनश्चैव सूपकारः स उच्यते ॥१०७॥

इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ।
अप्रमादी सदा दक्षः प्रतीहारः स उच्यते ॥१०८॥
यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किं ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥१०९॥
किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते ।
नग्नक्षपणके देशे रजकः किं करिष्यति ॥११०॥

इति श्रीचाणक्यशतकं समाप्तम् ।

उद्धवसन्देशः ।

सान्द्रीभूतैर्नवविटपिनां पुष्पितानां वितानैर्
लक्ष्मीरक्तां दधति मधुरापत्तने दत्तनेत्रः ।
कृष्णः क्रीडाभवनवडभीमूर्ध्नि विद्योतमानो
दध्यौ सद्यस्तरलहृदयो गोकुलारण्यमैत्रीं ॥१॥
श्वासोल्लासैरथ तरलितस्थूलनालीकमालः
कुर्वन् पूर्णां नयनपयसां चक्रवालैः प्रणालीः ।
स्मारं स्मारं प्रणयनिविडां वल्लवीकेलिलक्ष्मीं
दीर्घोत्कण्ठाजटिलहृदयस्तत्र चिन्ताचितोऽभूत् ॥२॥

अन्तःखान्ते चणमथ परान्वय्य पाराभिलाषी
कष्टाम्भोधेर्भवनशिखरे कुट्टिमान्तर्निविष्टः।
सोत्कण्ठोभूदभिमतकथां संशितुं कंसभेदी
नेदिष्ठाय प्रणयलहरीवद्धवाग् उद्धवाय ॥३॥

त्वं सर्वेषां मम गुणनिधे बान्धवानां प्रधानं
त्वत्तो मन्त्रैः श्रियमविचलां यादवाः साधयन्ति।
तुल्याश्वासादभिमतविधौ कामये त्वां नियोक्तुं
न्यस्तः साधीयसि सफलतामर्थभारो हि धत्ते ॥४॥

संरम्भेण क्षितिपतिगिरां लम्भिते गर्वितानां
वृन्दारण्यान्मयि मधुपुरीं गान्दिनीनन्दनेन।
वल्लव्यस्ता विरहदहनज्वालिकामण्डलीनाम्
अन्तर्लीनाः कथमपि सखे जीवितं धारयन्ति ॥५॥

प्राणेभ्यो मे प्रणयवसतिर् मित्र तत्रापि राधा
धातुः सृष्टौ मधुरिमधुराधारणाद्द्वितीया।
वाचोयुक्तिस्तवकितपदैरद्य सेयं सखीनां
गाढाश्वासैर्विधुरविधुरं प्राणभारं बिभर्त्ति ॥६॥

गत्वा नन्दीश्वरशिखरिणो मेखलां रत्नभूतां
त्वं वल्लीभिर्वलयितनगां वल्लवाधीशपल्लीं।
तां दष्टाङ्गीं विरहफणिना प्राणयन् प्रीणयार्त्तां
वार्तामन्त्रध्वनिभिरथ मे मन्त्रिचूडामणीन्द्र ॥७॥

तिष्ठन्त्येते जगति बहवस्त्वद्विधानां विधातुं
चेतः पूर्त्तिं ननु जनपदामूर्त्तिभिर्मे सनाथाः।

भूयोभूयः प्रियसख शपे तुभ्यमव्याजतोऽहं
भूरन्या मे हृदि सुखकरी गोष्ठतः क्वापि नास्ति ॥८॥
मद्विश्लेषज्वलनपटलीज्वालया जर्जराङ्गीः
सर्वे तस्मिन्निधनपदवीं शाखिनोप्याश्रयिष्यन्।
गोपीनेत्रावलिविगलितैर्भूरिभिर्बाष्पवारां
पूरैस्तेषां यदि निरवधिर्नाभिषेको ऽभविष्यत् ॥९॥
आत्मक्लेशैरपि नहि तथा मेरुतुङ्गैर् व्यथन्ते
वल्लव्यस्ताः प्रियसख यथा मद्व्यथालेशतोपि।
दुर्वारां मे विरहविहितां निह्नुवानस्तदार्त्तिं
प्रेमग्रन्थिं त्वमतिपृथुलं तासु विख्यापयेथाः ॥१०॥
भ्रातर्नन्दीश्वरगिरिमितो यास्यतस्ते विदूरं
पन्थाः श्रीमानयमकुटिलः कथ्यते पथ्यरूपी।
प्रिये सद्यस्त्वयि निपतिते गोकुलानन्दसिन्धौ
सन्तस्तुष्टे सुहृदि हि निजां तुष्टिमेवामनन्ति ॥११॥
अग्रे गौरीपतिमनुसरेः पत्तनान्तर्वसन्तं
गोकर्णाख्यं व्यसनजलधौ कर्णधारं नराणां।
यस्याभ्यर्णे सह रविजया सङ्गमो सङ्गमानाम्
आविष्कुर्वन्नभिमतधुरां धीर सारस्वतोस्ति ॥१२॥
आरूढस्ते नयनपदवीं तन्निधन्यासिसोयं
गोपीनग्नं करणमुरलीकाकलीकः कलावान्।
इत्यालापस्फुरितवदनैर्यत्र नारीकदम्बैर्
दृग्भङ्गीभिः प्रथममथुरासङ्गमे चुम्बितोस्मि ॥१३॥

तस्मादन्तर्विरचितपरानन्दपूरादद्दूरां
याहि प्रीत्या सपदि पदवीमम्बिकाकाननस्य ।
यत्रानन्दोत्सवमकरवं सर्पतः सर्पतायाः
नन्दं विद्याधरमपि पुरामोचयन् वल्लवीनां ॥१४॥
भूयोभिस्त्वं किल कुवलयापीडदन्ताग्रघातैर्
एतां निम्नोन्नतपरिसरां स्यन्दने वर्त्तमानः ।
मुञ्चोत्तुङ्गां मिहिरदुहितुर् धीरतीरान्तभूमिं
मन्दाक्रान्तां न खलु पदवीं साधवः शीलयन्ति ॥१५॥
मुञ्चासव्ये विहगरुचिरं किञ्चिदस्मादुदञ्चं
राजत्तीरं नवसुमनसां राजभिस्तीर्थराजं ।
यत्रापूर्वं किमपि कलयांचक्रतुर्मत्प्रभावाद्
आभीराणां कुलमपि तथा गान्धिनीनन्दनोऽपि ॥१६॥
यज्वानस्ते यदपि भवतो विप्रिया हेलनान्मे
नम्रास्तेषां यदपि भवनद्वाररथ्यां जिहीथाः ।
गायन्तीनां मदनुचरितं तत्र विप्राङ्गनानाम्
आलोकाय स्पृहयसि न चेदप्यभाबैर्जितोऽसि ॥१७॥
तद्विख्यातं स्फुटविटपिनां मण्डलेनाभिपर्णं
तूर्णं गच्छेरुपपुरिपुरः कोटिकाख्यं प्रदेशं ।
यत्र प्राप्ते मयि विकिरतो नेत्रमुद्यानपाली
शालीनापि प्रकटितभुजा मूलमल्पं जहास ॥१८॥
इत्यं क्रान्त्वा पुरपरिसरान् याहि सट्टीकराख्यं
पट्टीमत्तं स्मरनृपतेः पुष्पितारण्यमारात् ।

श्रीदामानं सुभग गरुडीकृत्य यत्राधिरूढः
क्रीडाकारी दधदुरुभुजां द्वादशाहं वसामि ॥१९॥
मुग्धे श्यामः कलयति युवा पश्य मामेव नत्वाम्
इत्युल्लासैरहमहमिकां सर्वतः कुर्वतीभिः ।
यानालम्बी सरलनयनालोकमैत्रीभराणां
ग्रामीणाभिर् युवतिभिरहं यत्र पात्रीकृतोऽस्मि ॥२०॥
मुञ्चन् सव्ये वहलवकुलां काननश्रेणिपल्यं
तन्नतुङ्गं ह्रदपरिसरं दक्षिणे कालियस्य ।
फुल्लाभिस्त्वं पिहितमिहिरद्योतमन्तर्लताभिर्
धीराध्वानं विमलसरसीराजिभाजं भजेथाः ॥२१॥
वल्लीचित्रं व्रजमृगहरं तं व्रजश्रेणिपल्ये
कल्ये क्रीडा वनविहरणोत्कण्ठया गच्छती मे ।
यत्रोदञ्चत् कलवलयितैर्वेणुगीतैर्मृगाणां
तूर्णं राजीरजनिविरहव्याकुलानामहारि ॥२२॥
आनम्राणां हसितमुकुलैः फुल्लगण्डस्थलानां
दूराद्दृष्टिं स्फुटसुमनसां स्पन्दने मुञ्चतीनां ।
ते वैदग्ध्योपरिमलकिरो यत्र सीमन्तिनीनां
सभ्रूवीणावलिविलसिता कङ्कलक्षाः कटाक्षाः ॥२३॥
एष श्रीमान् प्रसवति रथी माधवो राधिकायाः
प्रेमस्थूलङ्करणकुटिलालोकभङ्गीविलासः ।
इत्यौत्सुक्याद्व्रजयुवतिभिः स्मारितोद्दामनर्मा
धर्माम्भोभिर्ततनुरहं यत्र चित्रायितोऽस्मि ॥२४॥

लीलाखण्डो मम विजयते यत्र नागेन्द्रभोगे
श्रीराधाङ्कोद्धृतपदयुगाम्भोजसंवाहनस्य ।
तव क्षीराम्बुधिपरिमलस्पर्द्धिने वर्द्धहस्ते
ग्रामे कामं व्रजवति भजे वद्धविश्रामसौख्यं ॥२५॥
सोयं दृश्यं मथननिनदाक्रान्तदिक्चक्रवालो
घोषस्तोषं तव जनयिता योजनद्वन्द्वचुम्बी ।
दिव्येनालं निखिलजगतीं सर्पिषा तर्पयन्ती
भ्रातर्भूम्ना विलसति विधेर् गोमयी यत्र सृष्टिः ॥२६॥
कक्षां लक्षावधिभिरभितः कासरीभिः परीतां
तां सन्नद्धव्रजविजयिनीं शाल्मलाख्यां भजेथाः ।
वीथ्यां वीथ्यां पृथुकनिकरा यत्र मित्रानुवेलं
खेलन्तस्माननुविदधते विक्रमान्मे क्रमेण ॥२७॥
दूरादेष प्रणयति पुरा लब्धसाहारनामा
प्रेमानन्दं तव मयनयोरौपनन्दो निवासः ।
जङ्घालेन क्षितिपतिपुरीं स्यन्दनेनानुविन्दन्
यत्राहारं प्रियमकरवं हारि हैयङ्गवीनं ॥२८॥
गोपेन्द्रस्य व्रजपरिसरे लब्धतुष्टिर्लभेथास्
तां विख्यातां कलितमहिलाचारुहेलां रहेलां ।
यामासाद्य प्रहितमुरलीकाकलीदूतिकोहं
सायं गोपीकुलमकरवं सामि नेपथ्यनद्धं ॥२९॥
यत्र प्रीतानहमकरवं मित्रभावेन यावान्
हारं हारं विदितसमयो वल्लवीनां दधीनि ।

शाखिव्रातः स खलु वलितः प्रीतशाराभिधस्ते
देशे क्लेशं पथिषु रथिनो दारयिष्यत्युदारं ॥३०॥

सोयं रम्भानटनचटुलैः सेव्यमानो मरुद्भिः
कन्दाशोकोत्तमसुमनसां निर्भरामोदधारी ।
पीयूषेण स्फुरितवसतिस्त्वामुदञ्चद्गुरुश्रीर्
लोकातीतः किल मदयिता वल्लवेन्द्रस्य लोकः ॥३१॥

पश्यन्तीनां चकितचकितं लब्धसङ्गं शशाङ्के
मामुत्तुङ्गव्यसनविसरैः काममुन्मादितानां ।
तासां विद्युत्तरलवपुषां वल्लवीनां प्रपाताद्
विद्युत्कारीं कथयति जनो दक्षिणां यस्य कक्षां ॥३२॥

यत्राक्रूरः प्रणयनिविडोत्कण्ठया गुण्ठितात्मा
रङ्गाद्गोष्ठाङ्गनमनुसरन् मामलोकिष्ट वन्धुं ।
तद्दास्याम्भःकुलपरिचयारब्धजृम्भैः कदम्बैः
सा सम्वीता विलसति तटी यत्र सौयातिकाख्या ॥३३॥

धावद्बालावलिकरतलप्रोच्चलद्बालधीनां
यत्रोत्तुङ्गस्फटिकपटलस्पर्द्धिदेहद्युतीनां ।
घ्रायं घ्रायं नवतृणशिखां मुञ्चतीनां वलन्ते
वत्सालीनां चटुलपटुलं शश्वदाटीकनानि ॥३४॥

आभीरीणां नयनसरणीसङ्गमादेव तासां
सद्यो मौष्टायितमधुरिमोल्लासभङ्गोविधाता ।
पीठीभूतो मम परिमलोद्गारगोष्ठीगरीयान्
यत्राख्यामोमनुविजयते पाण्डरो गण्डशैलः ॥३५॥

रेणुर्नायं प्रसरति गवां धूमधारा कृशानोर्
वेणुर्नासौ गहनकुहरे कीचकौ रौरवीति।
पश्योन्मत्ते रविरभिययौ नाधुनापि प्रतीचीम्
मा चांचल्यं कलय कुचयोः पत्रवल्लीं तनोमि॥३६॥
दूरे वंशीध्वनिरुदयते हन्त मा धाव तावद्
धूम्रे दानीमपि नहि गवां लक्ष्यते धूलिलेखा।
अस्ति द्वारे गुरुरपि ततो लम्बितां स्तम्भयन्ती
क्षीरे नीवीं त्वमिह तरसा याहि गेहान्तरालं॥३७॥
आप्रत्यूषादपि सुमनसां वीथिभिर्ग्रथ्यमाना
धत्ते नासौ सखि कथमहो वैजयन्ती समाप्तिं।
धिन्वन् गोपीनयनशिखिनो व्योमकक्षां जगाहे
सोयं मुग्धे निविडधवलधूलिचक्राम्बुवाहः॥३८॥
अस्मिन् भूयो विस्मरवपुः सौरभे सौरभेयी
धूलिजालैः सवलितशिरो मालतीचक्रवाले।
अन्तर्गोष्ठं प्रविशति हरौ हन्त कस्या न चेतस्
तृष्णां धत्ते जरति मुखरे किं वृथा रारटीषि॥३९॥
मा मन्दाक्ष्यं कुरु गुरुजनाद्देहलीं गेहमध्याद्
एहि क्लान्ता दिवसमखिलं हन्त विश्लेषतोऽसि।
एष स्मेरो मिलति मृदुले वल्लवीचित्तहारी
हारी गुञ्जावलिभिरलिभिर्लीढगन्धो मुकुन्दः॥४०॥
सौरिर्गोष्ठाङ्गनमनुसरन् शिञ्जितैरेवमुग्धः
किङ्किण्यास्ते परिहर दृशोस्ताण्डवं मण्डिताङ्गि।

आराद्गीतैः कलपरिमिलन्माधुरीकैः कुरङ्गे
लब्धे सद्यः सखि विवशतां वागुरां कल्पनीति ॥४१॥

याग्त्या लोलोद्भटकलतुलाकोटि सद्यस्त्वयासौ
लब्धा चन्द्रावलि सखि कुतः शब्दभेदाख्यविद्या ।
पश्योपेन्द्रः सदनपदवीं वल्लवेन्द्रस्य मुञ्चन्
अन्तर्भिन्नो मुहुरिह यया संभ्रमाद्भ्रमीति ॥४२॥

सा सोत्कण्ठं वसति वसतेर्वत्सला द्वारि देवी
वल्लीलोमैः क्षणमिह मुखाम्भोजलक्ष्मीं पिधेहि ।
दूराच्चेतोमणिमपहरन्नेष भव्याङ्गि दिव्यो
विब्बोकस्ते मुरविजयिनो वर्त्मपाती बभूव ॥४३॥

यष्टिर्भूमौ लुठति तरसा स्रंसते पश्य वंशी
कंसारातेः स्खलनममलं ध्वङ्गमङ्गीकरोति ।
दूरान्नन्दः कलयति पुरो लोपयामुं न राधे
बन्धे देवि स्थगय चपलापाङ्गभङ्गीवितानम् ॥४४॥

तिष्ठन् गोष्ठाङ्गनभुवि मुहुर्लोचनान्तं विधत्ते
जातोत्कण्ठस्तव सखि हरिर्देहलीवेदिकायां ।
मिथ्यामानोन्नतिकवलिते किं गवाक्षार्पिताक्षी
स्वान्तं हन्त ग्लपयसि बहिः प्रीणय प्राणनाथं ॥४५॥

पश्य व्रीडां सकपटमसौ तन्वती नः पुरस्ताद्
द्वारे गौरी न सरति मुहुः शौरिणाकारितापि ।
आकृष्टाया गहनकुहरे वेणुविद्याविनोदैर्
जानात्यस्याः पुनरनुपमं विक्रमं कुञ्जवीथि ॥४६॥

इत्थं साचिस्मितरुचिमृतां यत्र सन्ध्यानुबन्धे
मामुद्दिश्य स्मरपरिमलं विभ्रतीनामदभ्रं।
पौनःपुन्याद्विविधहृदयोत्तुङ्गभावानुसङ्गी
लीलाजल्पः कुवलयदृशां प्रेमपूर्णः पुरासीत् ॥४७॥

द्वादशभिः कुलकम् ॥

दामाकृष्टिद्विगुणितकरारण्यविद्योतितानां
घर्माम्भोभिर्दरवलयितस्मेरगण्डस्थलानां।
भालोपान्तप्रचलदलकश्रेणिभाजां मदीयैः
कीर्त्तिस्तोमैर् मुखरितमुखाम्भोजलक्ष्मीभराणां॥४८

हेलाचंचलद्वयरणितग्रन्थितैर्मन्थनीनां
ध्वानोन्मिश्रैर्मसृणमसृणं मथ्नतीनां दधीनि।
गीतैस्तासां कुवलयदृशां यत्र रात्रेर्विरामे
प्रेमोत्तानैर्मम समजनि स्वप्नलीलासमाप्तिः ॥४९॥

युग्मकम् ॥

निर्माय त्वं वितरफलकं हारि कंसारिमूर्त्या
वारं वारं दिशसि यदि मां माननिर्वाहनाय।
यत्पश्यन्ती भवनकुहरे रुद्धकर्णान्तराहं
साहङ्कारा प्रियसखि सुखं यापयिष्यामि यामं ॥५०॥

सन्ति स्फीता व्रजयुवतयस्त्वद्विनोदानुकूला
रागिण्यग्रे मम सहचरी न त्वया घट्टनीया।
दृष्ट्वाप्यर्घ्यं शठकुलगुरुं त्वां कटाक्षार्द्धचन्द्रान्
मूकोदण्डे घटयति जवात्पश्य संरम्भिणीयं ॥५१॥

मा भूयस्त्वं वद रविसुतातीरधूर्त्तस्य वार्त्तां
गन्तव्या मे न खलु तरले दूति सीमापि तस्य।
विख्याताहं जगति कठिना यत् पिधत्ते मदङ्गं
रोमाञ्चोयं सपदि पवनो हैमनस्तत्र हेतुः॥५२॥
कामं दूरे वसतु पटिमा चाटुवृन्दे तवायं
राज्यं स्वामिन् विरचय मम प्राङ्गणं मा प्रयासीः।
हन्त क्लान्ता मम सहचरी रात्रिमेकाकिनीयं
नीता कुञ्जे निखिलपशुपीनागरोज्जागरेण॥५३॥
मेदिन्यां ते लुठति दयिता मालती म्लानपुष्पा
तिष्ठन् द्वारे रमणि विमनाः खिद्यते पद्मनाभः।
त्वं चोन्निद्रा क्षपयसि निशा रोदयन्ती वयस्या
माने कस्ते नवमधुरिमा तन्नु नालोकयामि॥५४॥
मद्वक्त्राम्भोरुहपरिमलोन्मत्त सेवानुबन्धे
पत्युः कृष्णभ्रमर कुरुषे किन्तरामन्तरायं।
तृष्णाभिस्त्वं यदि कलकृतव्यग्रचित्तस्तदाग्रे
पुष्पैः पाण्डुच्छविमविरलैर् याहि पुन्नागकुञ्जं॥५५॥
अत्रायान्तं चलमपि हरिं लोकयन्तो वलिष्ठां
त्वामालम्ब्य प्रियसखि घने नास्मि कुञ्जे निलीना।
अस्मान्मुग्धे हृदयनिहितादद्य पीताम्बरात्ते
शक्तो नान्यः कुचपरिचये मत्पुरो मा व्यथिष्टाः॥५६॥
मां पुष्पानामवचयमिषाद्दूरमानीय कुञ्जं
स्मित्वा धूर्त्ते किमिति रभसादुच्चकैर् गायसि त्वं।

सङ्क्रामन्तर्नरचय मुधा तन्वि गीतं तनोमि
स्फीतं वृन्दावनभुवि मुकुन्दः कृष्णसारोत्सवाय ॥५७॥
वारं वारं व्रजसि सलिलच्छद्मना पद्मबन्धोः
पुत्रीं ज्ञातस्तव सखि रसः पुण्डरीकेक्षणोसौ ।
चेतः काव्या भवति विशदासारसाली न वामे
तेन स्मेरं मुकुन्दमभिलषाम्यच्युतं रक्तपद्मं ॥५८॥
पश्याम्यन्तर्विहितवसतिं त्वामराराङ्गनानाम्
अत्र चीरे स्पृहयसि कथं कृष्णकण्ठग्रहाय ।
साधु ब्रूषे सखि मदकलो मां शिखण्डोज्ज्वलोयं
कुञ्जे दृष्ट्वा भुजगदमनोद्दामदर्पोभ्युपैति ॥५९॥
बाले चन्द्रावलि नहि वहिर्भूय भूयः प्रदोषे
गेहात् तृष्णावति कुरु पुरः कृष्णवर्त्मावलोकं ।
सर्वस्यान्तर्जडिमदमने पावके नाद्य लब्धे
मुग्धे सिद्धिर्मम रसवती प्रक्रिया न प्रयाति ॥६०॥
हस्तेनाद्य प्रियसखि लसत्पुष्करामेन दूरात्
कृष्णेनाहं मदकलदृशा कम्पिताङ्गी विकृष्टा ।
नीचैर्जल्प भ्रमति पुरतो भ्रान्तचित्ते गुरुस्ते
हुंकालिन्दीपुलिनविपिने दीप्रदन्तीश्वरेण ॥६१॥
वृन्दारण्ये मम विदधिरे निर्भरोत्कण्ठितानि
क्रीडोल्लासैः सपदि हरिणा हा मया किं विधेयं ।
ज्ञातं धूर्त्ते स्पृहयसि मुकुन्दनन्दपुत्राय तस्मै
मा शङ्किष्ठाः सखि मम रसो दिव्यसारङ्गतोभूत् ॥६२॥

इत्थं भूता बहुविधपदारम्भगम्भीरगर्भा
कर्णानां मे स्फुटतरतया कोटिभिः पातुमिष्टा ।
आसीत्तासां प्रियसख पुरा यत्र कल्याणवाचां
प्रेमोल्लासप्रकटनकला कर्मठा नर्मगोष्ठी ॥६३॥
चतुर्दशभिः कुलकम् ॥

केयं श्यामा स्फुरति सरले गोपकन्या किमर्थं
प्राप्ता सख्यं तव मृगयते निर्मितासौ वयस्या ।
आलिङ्गामुं मुहुरितितथा कुर्वती मां विदित्वा
नारीवेषं ह्रियमुपययौ मानिनी यत्र राधा ॥६४॥

यत्रोत्तुङ्गाः करपरिचयं शश्वदासेदिवांसो
भूयांसो मे त्रिभलहृदां कल्पिता मण्डलीभिः ।
बन्धायोद्यत्तरलतरसां तर्णकानां निखाताः
कीलाः कूलस्थलवलयिनो भान्ति पद्माकराणां ॥६५॥

नो जानीमः कठिनविधिना मद्विधानां कपाले
गोपालीनां किल विलिखिता कीदृशी वर्णलेखा ।
यः सन्ध्यायां सुमुखि मिलितो गोकुले राजदूतः
सोयं कर्णे निभृतनिभृतं माधवं व्याहरतीति ॥६६॥

एष चत्ता व्रजनरपतेराज्ञया गोकुलेस्मिन्
बाले प्रातर्नगरगतये घोषणामातनोति ।
दुष्टं भूयः स्फुरति च बलादीक्षणं दक्षिणं मे
तेन स्वान्तं स्फुटति चटुलं हन्त भाव्यं न जाने ॥६७॥

प्रातर्यातो नरपतिपुरे तथ्यमाकर्ण्य शौरेर्

आयामाय प्रियसखि मया यामिनी प्रार्थिताभूत् ।
पश्य क्षिप्रं प्रथितलघिमा पापिनीयं प्रभाता
जायन्ते हि प्रचुरतमसो नानुकूलाः परेषु ॥६८॥

यावद्वार्त्तां न किल भजते गान्दिनेयानुबन्धस् .
तावन्नत्वा सुमुखि भवतीं किञ्चिदभ्यर्थयिष्ये ।
पुष्पैर्यस्या मुकुरकवरं कर्णपूरान्मुरारेः
सेयं फुल्ला गृहपरिसरे मालती पालनीया ॥६९॥

नावैषि त्वं पतितमशनिं मूर्ध्नि निर्मीयमाना
मेनांकस्ते सखि शिखरिणीं हन्त पाता हतासि ।
तूर्णं मुग्धे वहिरनुसर प्राङ्गणं गेहमध्याद्
अध्यारूढो जिगमिषुरसौ स्यन्दनं नन्दसूनुः ॥७०॥

आसीदार्य्ये पशुपपटलीमन्तरा नान्तरायः
प्रापुः पापा नच विकलतां पादभङ्गैस्तुरङ्गाः ।
ध्वस्तो नाभूद्‌यमपि मनाक् स्यन्दने चक्रबन्धः
सत्यं गन्ता मधुपुरमसौ हन्त किं केशिहन्ता ॥७१॥

आराद्ग्रे कलय नृपतेर् दूत निर्धूतलज्जा
सज्जा तन्वी किमपि विषमं साहसं कर्त्तुमिच्छुः ।
यानाद्यावद्विसृजति पुरश्चन्द्रहासं न कृष्णं
हस्तात्तावद्विसृजति सखी चन्द्रहासं न कृष्णां ॥७२॥

मुग्धे पश्य क्षणमपि हरिं नेत्रमुन्मीलयन्ती
मोहेन त्वं विरचय मुकुन्दात्मनो वञ्चनानि ।
दूरेयान् काकुत्कारमपि पुरो हन्त सीमन्तिनीनां

क्रूरस्तूर्णं विनुदति रथं दूरमक्रूरनामा ॥७३॥
पश्य श्यामोदरि तव मुखालोकजन्मा हि शोको
वारं वारं हरिनयनयोर्वाष्पमन्तस्तनोति ।
धावद्वाजिस्फुरदुरुखुरोत्तानितानां वितानो
धूलीनान्तु श्रयति विसरन्नेष मिथ्याकलङ्कः ॥७४॥
कृष्णं मुष्णन्नकरुणबलाद्गोपनारीवधार्थी
मा मर्यादां यदुकुलभुवां भिन्धि रे गान्दिनेय:
इत्युत्तुङ्गा मम मधुपुरे यावया तत्र तासां
वितस्तानां परिववलिरे वल्लवीनां विलापाः
दशभिः कुलकम् ॥
शश्वन्नीराहरणकपटप्राप्तगोपालनारी
गूढक्रीडावसतिनिविडच्छायकुञ्जोपगूढः ।
यत्रादूरे विलसति महान् बद्दरोलम्बसङ्घा
पद्मामोदस्नपितपवनः पावनाख्यस्तडागः ॥७६॥
लीलाक्रान्तैर्मुरविजयिनः सर्वतः पादपातैर्
वैलक्षण्यं किमपि जगतामन्तराकर्षि नीताः ।
एते नन्दीश्वरपरिसरा नेत्रवीथीं भजन्तस्
तीव्रं मातः किमपि दहनं चेतसि ज्वालयन्तो ॥७७॥
अस्ति प्रेम्णां त्वयि परिमलो मांसलः कंसवैरी
अद्य श्वो वा स तव भविता हारिहारानुकारी ।
दम्भोलीनामपि सुवदने गर्वनिर्भेददक्षैर्
एभिः कामं किमु विलपितैर्बान्धवान् दन्दहीषि॥७८॥

मा कार्पण्यादिरचय वृथा वाष्पमोक्षं हताशे
कृष्णाश्लिष्टां तनुमनुपमां स्वेच्छया न त्यजामि ।
ज्वालस्तीव्रो विरहदहनादाप्तजन्मा ज्वलान्मे
मर्मोन्माथी लघुतरमिमां पातयन्दन्दहीति ॥७९॥
कारुण्याब्धौ क्षिपसि जगतीं हा किमेभिर्विलापैर्
धेहि स्थैर्यं मनसि यदसूरध्वगे वद्धरागा ।
स्मृत्वा वाणीमपि यदि निजां सव्रजं नाजिहीते
धूर्तोऽस्माकं त्रिजगति ततस्त्वं विनिर्दोषताभूत् ॥८०॥
क्वायं गन्ता मधुरिपुरितो गोकुलादस्मदीयः
काले वंश्ये सुखमिति मया हन्त मानो व्यधायि ।
का जानीते यदिह खलता चातुरी दीक्षितेन
प्रक्षेप्तव्यं शिरसि कुलिशं गान्धिनीनन्दनेन ॥८१॥
न क्षोदीयानपि सखि मम प्रेमगन्धो मुकुन्दे
क्रन्दन्तीं मां निजशुभगताख्यापनाय प्रतीहि ।
खेलद्वंशीवलयिनमनालोक्य तं वक्त्रबिम्बं
ध्वस्तालम्बा यदहमहह प्राणकीटं बिभर्मि ॥८२॥
आशापाशैः सखि नवनवैः कुर्वती प्राणबन्धं
जाता भीरुः कति पुनरहं वासराणि क्षयिष्ये ।
एते वृन्दावनविटपिनः स्मारयन्तो विलासान्
उत्फुल्लास्तान्मम किल बलान्मर्म निर्मूलयन्ति ॥८३॥
सा भ्रूयाग्यन्मनसिजधनुर्विभ्रमोद्बोधविद्या
चिल्लीवल्लिभ्रमिमधुरिमोद्दामसम्पद्गरिष्टा ।

एतामार्तिं मम शमयिता स्मेरता सङ्कराङ्गी
प्रेमोत्तुङ्गः किमु मुरभिदो भङ्गुरापाङ्गभङ्गी ॥८४॥
कामं दूरे सहचरि वरीवर्त्ति यत् कंसवैरी
नेदं लोकोत्तरमपि विपद्दुर्दिनं मे दुनोति ।
आशाकीलो हृदि किल धृतः प्राणरोधी तु यो मे
सोयं पीडां निविडवडवावह्नितीव्रस्तनोति ॥८५॥
तव स्फीताधरमधुभरे शीतलोत्सङ्गसङ्गे
सौन्दर्य्येणोल्लसितवपुषि स्फारसौरभ्यपूरे ।
नर्मारम्भस्थपुटितवचः कन्दले नन्दसूनोः
मोदिष्यन्ते मम सखि कदा हन्त पञ्चेन्द्रियाणि ॥८
भिन्दन्नक्ष्णोः किल कलुषतां श्यामलः श्यामलाभिर्
लिम्पन्तीभिर्गिरिपरिसरं माधुरीणां छटाभिः ।
आविर्भावी गुरुतरचमत्कारभाजः कदा मे
खेलन्नग्रे निखिलकरणानन्दनो नन्दसूनुः ॥८७॥
आनम्रायां मयि निजमुखालोकलक्ष्मीप्रसादं
वैदग्ध्येणीविरचितमनोलाघवायां विधेहि ।
सेवाभाग्ये यदपि न विभो योग्यता मे तथापि
स्मारं स्मारं तव करुणतापूरमेवं ब्रवीमि ॥८८॥
क्रोडातल्पे निहितवपुषः कल्पते पुष्पजालैः
स्मित्वा स्मित्वा प्रणयरभसात् कुर्वतो नर्मभङ्गीं ।
विन्यस्यन्ती तव किल मुखे पूगफालीं विधास्ये
कुञ्जद्रोण्यामहिमह कदा देव सेवाविनोदं ॥८९॥

कृत्युन्नद्धैः पशुपरमणीमण्डलीनां विलापैर्
भूयोभूयः करुणकरुणैरद्य कीर्णान्तरस्य ।
उद्यद्दास्या त्यजति परितो रुद्धकर्णा कराभ्यां
दूरात् पान्थावलिरपि सखे यस्य सीमोपकण्ठं ॥६०॥

चतुर्दशभिः कुलकम् ॥

युक्तं शृङ्गीकनककनिकरालिङ्गिताङ्गैस्तुरङ्गैर्
दृष्ट्वा नन्दीश्वरतटभुवि स्यन्दनं ते मिलन्तं ।
मामाशङ्क्य स्फुटमुपगतं सन्निधातव्यमाराद्
धावन्तीभिस्तरलतरलं राधिकायाः सखीभिः ॥६१॥

गोपालीनामपि वपुरलङ्कारलीलां दधानो
येषां नव्यः किसलयगणो रागिणं माञ्चकार ।
भाव्यङ्गृङ्गावलिषु भवता तेषु शस्ताशिषां मे
वृन्दं वृन्दावनविटपिषु प्राज्ञ विज्ञापनीयं ॥६२॥

मत्ता वंशीनिनदमधुभिस्तूर्णगा स्तर्णकानां
या मुञ्चन्त्यः प्रणयमभितः सस्वरस्तुतास्याः ।
तासामुच्चैर्मम परिपठन् कामतो नामधेयं
क्षेमं पृच्छेस्त्वमथ निचये नैचकैनैचकीनां ॥६३॥

डिम्भव्यूहं हृतवति विधौ तत्तदाभस्तदाहं
स्तन्यं यासां मधुरमधयं वत्सरं वत्सलानां ।
वारं वारं मम नतिगणान् विज्ञ विज्ञापयेथा
नम्रस्तासां जठरपशुपीमण्डलीनां पदेषु ॥६४॥

आमोदं मे मधुरदधिरेमाममहंपूर्विकाभिर्

दूरे यान्तं कुसुमितवनालोकनाय स्पृशन्तः ।
श्रीदामाद्याः प्रियसहचरा हन्त मन्नामतस्ते
पौनःपुन्यान्निपुन भवता तुङ्गमालिङ्गनीयाः ॥ ६५ ॥
हत्वा रङ्गस्थलभुवि मया घोर कंसं नृशंसं
काकून्मिश्रैः प्रणयघृतकैर् गोकुलं प्रेषितस्य ।
आनम्रस्त्वं चरणयुगलं वल्लवेन्द्रस्य कामं
नामग्राहं मम गुणनिधे वन्दमानो दवीयाः ॥ ६६ ॥
तां वन्देथा मम सविनयं नामतः क्षामगात्रीम्
आक्रोशन्तीं खलनरपतिं साङ्गुलीभङ्गमुच्चैः ।
अन्तश्चिन्ताविलुलितमुखीं हा मदेकप्रकृतिं
सर्वाङ्गैस्त्वं कलितवसुधालम्बमम्बां यशोदा ॥ ६७ ॥
या निश्वासोद्गमवलयिनं हारवं मुञ्चमाना
खेदोदग्रं मम गुणकथामन्तरेणान्तरेण ।
क्षामीभूता क्षितिपतिपुरीवर्त्मविन्यस्तनेत्रा
वाष्पोद्गारस्नपितवसना वासराणि क्षिपन्ती ॥ ६८ ॥
अक्रूराख्ये हृतवति हठाज्जीवनं मां निदाघे
विन्दन्तीनां मुकुरविरलाकारमन्तर्विदारं ।
सद्यः शुष्यन्मुखवनरुहां वल्लवीदीर्घिकानां
यासामासाद्य्दमनुसृताः प्राणकूर्मा वसन्ति ॥ ६९ ॥
तासां बद्धाञ्जलिरनुसरैरन्तिकं यन्त्रितात्मा
शङ्काभिस्त्वं क्षमपरिणमद्विक्रियाणां प्रियाणां ।
दूत्यं कुर्व्वन्नसि गुणनिधे सापराधस्य यन्मे

भर्त्तुर्दोषादपि हि कुशला हन्त दुष्यन्ति भृत्याः ॥१००॥
मन्ये पथ्यस्त्वदकितभवद्वीक्षणेनाकुलानां
व्युत्क्रान्तङ्कोच्चरलितमनः कल्पनाजल्पभाजां ।
तिष्ठन्नासां पथि नयनयोर्निःसलाकं गतानां
सन्देशं मे लघु लघु सखे हारिणं व्याहरेथाः ॥१०१॥
त्रिभिः कुलकम् ॥
यः कालिन्दीवनविहरणोद्दामकामः कलावान्
वृन्दारण्यान्नरपतिपुरं गान्धिनीयेन नीतः ।
कुर्व्वन् दूत्यं प्रणयसचिवस्तस्य गोपेन्द्रसूनोर्
देवीनां वः सपदि सविधं लब्धवानुद्धवोस्मि ॥१०२॥
तापोन्नद्धश्वसितपटलीदूयमानाधरश्रीर्
मुक्ताक्रीडो धवलिमधुराहिण्डिरक्षामगण्डः ।
स्मारं स्मारं गुणपरिमलं हन्त वः क्लान्तचेताः
सोयं कान्तः किमपि सरलाः सुन्दरं सन्दिदेश ॥१०३॥
कच्चिन्नीतं न भजत मुकुन्दानवेक्ष्यः पुरावत्
कल्याणं वः सरलहृदयाः कच्चिदुल्लालसीति ।
कच्चिद्यूयं स्मरथ सरसं तत्र चित्तानुकूलं
कुञ्जे कुञ्जे कृतमथ मया तञ्च सेवाप्रपञ्चं ॥१०४॥
नीतो यत्नाद्विविधविनयैर्बन्धनं बन्धुताभिः
कर्त्तुं भूयः किमपि कुशलं पत्तने वर्त्तमानः ।
ध्यायं ध्यायं नवनवमहं सौहृदं वः सुकण्ठ्यो
गाढोत्कण्ठाक्रमपरवशं वासराणि क्षिपामि ॥१०५॥

ज्ञातं ज्ञातं विरमत चिरं त्वादृशीनां चरित्रं
याभ्यस्तीव्रा समजनि मनो भेदिनी वेदनेयं
चक्षुर्वक्रं मयि किल तया प्रेमपूरं भवत्यो
येनोद्भ्रान्तस्त्रुटिमपि बलादुत्सहे नाद्य नेतुं ॥१०६॥

रासोल्लासान्निशि निशि चिरं स्वप्नवृन्दापदेशाद्
वृन्दारण्ये सुरभिनि मया सार्द्धमास्वादयन्ते ।
भूयोभूयस्तदपि च परित्यागिता दूषणं मे
शंसन्त्यः किं कुटिलहृदया न त्रपन्ते भवत्यः ॥१०७॥

ते ते चन्द्रावलि रसभरभ्रान्तनेत्रान्तमैत्री
वैचित्रीभिस्त्रिभुवनजये दत्तहस्तावलम्बाः ।
उत्सर्पन्तः स्मरशरणीं हन्त ते भ्रूविलासा
निःशङ्कं मे हृदयमधुना पांशवः भ्रंसयन्ति ॥१०८॥

तत्तत्त्वन्वि स्मरसि विपिने फुल्लशाखे विशाखे
कर्षन्नीविं तव मुकुरदृं वीक्ष्य दृद्धां मिलन्तीं ।
कल्याणीं मे वितर कितवे हन्त चेलान्तराले
गुप्तां गुञ्जावलिमिति वदन् यद्विलज्जस्तदासं ॥१०६॥

तां वैदग्धीपरिमलकथामुज्झिरन्ती सखीषु
क्रान्तीं दूरे नयपयसि निजां हन्त धन्यासि धन्ये ।
ध्यायन्नाहं तमिह नगरे देवि लोके विलोकं
प्रीत्या यत्र व्यसनविधुरं वक्त्रमुन्मुद्रयामि ॥११०॥

गम्भीराणि प्रमदगुरुभिर्गूढनर्मप्रबन्धैर्
माध्वीकानां मधुरिममहाकीर्त्तिविध्वंसनानि ।

सोत्कण्ठं मे स्फुरति हृदयं श्यामले कोमलानि
प्रेमोत्तुङ्गस्मितपरिचितान्यद्य ते जल्पितानि ॥१११॥
पद्मे पद्मस्तुतमुखि लतासद्मनि छद्मनिद्रां
लब्धे लुब्धा मयि मुरलिकां हर्तुकामा त्वमासीः।
धृत्वा पाणौ मुहुरथ मया कञ्चुकं लुञ्चता ते
यत्प्रारब्धं किमपि तदिदं स्वान्तमन्तः पिनष्टि ॥११२॥
न्यस्ताङ्गी मे सुरभिनि भुजस्तम्भयोरन्तराले
भूयोभिस्त्वं रहसि ललिते केलिभिर्लालितासि।
अन्तश्चिन्ताविधुरमधुना पांशुपुञ्जे लुठन्ती
हन्त म्लाना रचयसि कथं प्राणसन्धारणानि ॥११३॥
यः सेवाभिर्मुदमुदयिनीं तत्र भद्राङ्गि भद्रे
नीतस्ताभिर्निशि निशि मनःकर्षिणीभिस्त्वयासीत्।
स प्रेष्ठस्ते नवपरिचयादिङ्गितस्यानभिज्ञैः
कृष्णस्तूष्णीं पुरपरिजनैः सेव्यमानो दुनोति ॥११४॥
सोढव्यं ते कथमपि बलाच्चक्षुषी मुद्रयित्वा
तीव्रोत्तापं हत मनसिजोद्दामविक्रान्तिचक्रं
द्वित्रैरेव प्रियसखि दिनैः सेव्यतां देवि शैव्ये
यास्यामि त्वत्प्रणयचटुलभ्रूयुगाडम्बराणां ॥११५॥
इत्थं तासामनुनयकलापेशलः क्लेशहारी
सन्देशं मे कुवलयदृशां कर्णपूरं विधाय।
त्वं मच्चेतोभवनवडभीप्रौढपारावतीं तां
राधामन्तःक्लमकवलितां मन्मसेणाजिहीथाः ॥११६॥

सा पल्यङ्के किशलयदलैः कल्पिते तत्र सुप्ता
गुप्तानीरस्तवकितदृशां चक्रवालैः सखीनां।
द्रष्टव्या ते क्षमिमकलिताकण्ठनालोपकण्ठ
स्पन्देनान्तर्वपुरनुमितप्राणसङ्गा वराङ्गी॥११८॥
मालां मैत्रीविदुरमदुरःसङ्गसौरभ्यसख्यां
वासन्तीभिर्विरचितमुखीं पञ्चवर्णां गृहाण।
आरूढायाः परिणतिदशां ताद्दशीं सारसाक्ष्याः
साक्षादेतत्परिमलभ्रते कः प्रबोधे समर्थः॥११८॥
माल्यामोदव्यतिकरवहैर्बोधितायाः सबाष्पं
नेत्रद्वन्द्वं दिशि दिशि मुहुर्विक्षिपन्त्या विलक्षं।
तस्याः प्रोद्यत्पुलककलिकादन्तुरायाः पुरस्तान्
मन्दं मन्दं विनयमसृणस्त्वं विनम्रो जिहीथाः॥११९
धृत्वा मालां किशलयततेरञ्चले न्यञ्चदङ्गो
भ्रूसंज्ञाभिः सपदि सचिवीकृत्य तस्या वयस्याः।
दूत्यं स्वस्य प्रणयहृदयस्त्वं निवेद्यानवद्यां
धीमन् सद्यो मम कथयितुं वाचिकं प्रक्रमेथाः॥१२०
यः सर्वस्मात्तव किल गुरुस्त्वञ्च यस्यासि धीरे
प्राणेभ्यस्त्वं प्रणयवसतिर्यस्य यः स्यात्तवापि।
स त्वां धृत्वा मनसि विधुरे हन्त सम्भुज्यमानः
कृष्णस्तृष्णाचटलचटुलं देवि सन्देदिशीति॥१२१॥
सख्युर्लक्ष्मीमुखि मतमुरीकृत्य दूरीभविष्णोर्
धत्ते प्राणाननुपदविपद्विह्वचित्तापि साध्वी।

मुक्तच्छाया मुकुरसुमनाः क्षौणीपृष्ठे लुठन्ती
बद्धापेक्षं विलसति गते माधवे माधवीयं ॥१२२॥
नीतं शोषं विरहरविणा सर्वतो हृत्तडागे
जाने कण्ठस्थलविलुठितप्राणमीनासि तन्वि ।
दूरे सम्प्रत्यविरलसुहृन्मारुतैर्वारितोहं
कृष्णाम्भोदो विलसदमृतालङ्कृतः किं करिष्ये ॥१२३॥
नायं स्वप्नो निशि निशि भवेद्यत्तया सङ्गतिर्मे
पश्यामोदं विधुमुखि निराबाधमास्वादयामि ।
किन्तु ज्ञातं त्वयि विजयते काचिदाकृष्टिविद्या
यां शंसन्ती हरसि तरसा मामदूराद्यदूनां ॥१२४॥
लब्धान्दोलः प्रणयरभसादेष तामोष्ठि नम्रः
प्रम्लायन्तीं किमपि भवतीं याचते नन्दसूनुः ।
प्रेमोद्दामप्रथमपदवी साक्षिणी शैलकक्षे
द्रष्टव्या ते कथमपि न सा माधवी कुञ्जवीथी ॥१२५॥
विन्दन् वंशीस्फुरितवदनो नेत्रवीथीमकस्माद्
अन्तर्बाधाकवलितधियो धातुभिर्धूमलोऽहं ।
क्रीडाकुञ्जेलुठितवपुषः स्वान्तमानन्दधारा
कल्लोलैस्ते रहसि सहसोत्फुल्लमुल्लासयिष्ये ॥१२६॥
प्रेमोन्नाहादहमधिवहन् बाष्पधारामकाण्डे
गण्डोत्सङ्गे स्मरपरिभवैः पाण्डुरे दत्तचुम्बः ।
कुर्वन् कण्ठग्रहविलसितं नन्दयिष्यामि सत्यं
सान्द्रेण त्वां सहचरि परिष्वङ्गरङ्गोत्सवेन ॥१२७॥

इत्थं तीव्रव्यसनजलधेः पारसीमामिवासां
संदेशैर्मे धृतगरिमभिर्दर्शयन् दूरदर्शी ।
भूयः कुर्वन् कुवलयदृशां तत्र चित्तानुकूलं
कालं कञ्चित् त्वमतुलमते गोकुलान्तर्नयेथाः ॥१२८॥
गोपेन्द्रस्य व्रजभुवि सखे केवलं यातया ते
नार्थः सिद्ध्येन्मम बहुमतः किन्तु वाढं तवैव ।
प्रेमोल्लासं परिकलयतां गोपसीमन्तिनीनां
स्मर्त्तव्या मे सपदि भवता भारतीसारतेयं ॥१२९॥
गोष्ठक्रीडोल्लसितमनसो निर्व्यलीकानुरागात्
कुर्वाणस्य प्रथितमथुरामण्डले ताण्डवानि ।
भूयोरूपाश्रयपदसरोजन्मनः स्वामिनोयं
तस्योद्दामं वहतु हृदयानन्दपूरं प्रबन्धः ॥१३०॥
श्रीदामाद्यैः शिशुसहचरैर् बाल्यखेलामकार्षीत्
गोपालीभिः सह युवति भीरासकेलिं चकार ।
दुष्टान् दैत्यानपि बहुतरान् हेलया यो जघान
स श्रीकृष्णस्तरणिककरुणस्तारयेद्वो भवाब्धिं ॥१३१॥

इत्युद्धवसन्देशाख्यप्रबन्धः समाप्तः ॥



## उद्धवदूतः ।



गोपीबन्धोरनवधिकृपाढ्यदाक्षिण्यसिन्धोर्
आदेशेन प्रणयपटुना प्रापितं गोकुलाय ।
गोधुग्वृन्दव्यसनविसरालोकदुःस्थं रहस्यं
मध्येकृत्य प्रियसहचरीमुद्धवं काचिदूचे ॥१॥

कस्त्वं साधो कुवलयदलश्याम विस्तीर्णदृष्टे
दृष्टे सद्यो भवति भवति स्निग्धमत्यन्तमन्तः ।
किम्वा प्रश्नैरहह मथुरानाथमुक्तं तदेतत्
यत्ते मौलौ कनककपिशं सौरभोद्गारि वासः ॥२॥

तत् त्वं तत्त्वं मधुपुरपतेर् लब्धलोभ्यप्रसादस्
तद्विश्रम्भस्थलमतिमहन्नेह सन्देहलेशः ।
वत्सैतन्मम च किमिदं कथ्यते दर्श्यते वा
जातं यस्मादखिलमधुना हन्त हास्यास्पदं नः ॥३॥

प्रस्थानं ते भवतु भगवन्नत्र वाप्यन्यतो वा
गम्भीरत्वं भजतु स भवानित्यमुत्तानतां वा ।
यद्वा तद्वा भवतु विधिना वञ्चितेयं वराकी
यत्ते विज्ञापयति निमिषं पातनीयोत्र कर्णः ॥४॥

क्वैषा योषित् प्रकृतिचपला पामरी कातरा च
ज्यायान् यातो यदुकुलपतेर्वल्लभत्वं क्व च त्वं ।

त्विन्नमौ मे तदपि भवता भव्य नोदासितव्यं
सानुक्रोशं वहति हि मनो दुर्गते दुर्जनेऽपि ॥५॥
त्वं कल्याणी ननु कुलवधूः सार्द्धमन्येन पुंसा
संलापस्ते सपदि समुदाचारसेतुं भिनत्ति।
जल्पन्नेवं नहि जहि घनश्यामदासोऽस्मदानां
लोकातीतं किमपि चरितं केन नालोकितं नः ॥६॥
अघश्यामं स्मरसि न मनागित्यमुल्लापिणीनां
प्राणत्राणप्रवणमनसो गोदुहो गेहिनीनां।
एताः शश्वत्कुसुमशयने शाययित्वा सखीव
मन्दं मन्दं सरसबिसिनीपल्लवैर् वीजयन्ति ॥७॥
सिंहव्याघ्रप्रभृतिभिरपि प्रेक्ष्यमाणाः प्रवाघैर्
आक्रन्देषु प्रखरकुररीसंसदं शिक्षयन्त्यः।
एकाकिन्यस्तरुणतिमिरास्तत्पदस्पर्शपुण्ये
वृन्दारण्ये कति युवतयो यामिनीर्यापयन्ति ॥८॥
पश्यन्नन्तर्द्वयमविरलस्यन्दमानाश्रुधारा
क्लिन्नाभोगं मम च किमभूर्लङ्घितो विस्मयेन।
गोगोपानां विरमतु कथा नेह कीरस्तिगत्वा
शारङ्गाणामपि वनजुषां पश्य कोटृक्त्वमस्ति ॥९॥
राधे मन्युं परिहर हरिः पादमूले तवायं
जातं दैवाद‌सदृशमिदं वारमेकं क्षमस्व।
एतानाकर्णयसि नयवन् कुञ्जकीरानुवादान्
एभिः क्रूरैर्यमविरतं वञ्चिता वञ्चिताः स्म ॥१०॥

त्वन्चेदन्चेरिह विमुखतामत्र वाले तमाले
प्राणान्मोक्ष्ये वनलतिकया कण्ठमुद्बध्य सद्यः।
आतङ्को वा कइह भवतां सेवकास्तस्य यूयं
यस्योद्दिश्यं न खलु किमपि स्त्रीवधादन्यदस्ति ॥११॥
पीतप्राणा प्रथममभुना पूतना स्तन्यदात्री
दिष्टस्यान्तं कति न गमिता वेणुगीतेन गोप्यः।
तस्य प्रीत्या जगति विदितं यत्कृतं यज्ञपत्ना
स्वातन्त्र्येण प्रविशति मनस्तत्र तत् किं करोमि ॥१२॥
अश्रुस्निग्धं नयनयुगलं रूढरोमाञ्चराजि
प्रत्यङ्गं ते तदलमनया देव दुःशङ्कया नः।
एतद्दीनोद्धरणपटवे तुभ्यमभ्यर्थनीयं
मत्सन्दिष्टं मुदिर महसि प्रेयसि प्रापयेति ॥१३॥
नन्दो न त्वां त्यजति निमिषं नापि देवी यशोदा
श्रीदामाद्या अपि न शिशवो नापि पौराः सदाराः।
स त्वं लब्धो रहसि च मया केनचिन्नापि दृष्टस्
तन्निर्णीतं किमपि सुकृतं शिष्टमस्माकमस्ति ॥१४॥
द्वित्रानत्रावससि दिवसानास्पदं घोषभर्त्तुस्
तेनाशङ्के पुरमिदमसि प्रेषितो माधवेन।
एतद्बीजं किमपि बहुधा मद्विधा भावयन्त्यस्
तस्यानत्यं किमपि न पुनः कृत्यमालोकयन्ति ॥१५॥
तेन प्राप्तौ सपदि जनकौ पोषकाभ्यां किमाभ्यां
किं गोरक्षैः सखिभिरधुना राजपुत्राः सखायः।

तस्य द्वारे कति करटिनस्तर्णकादेः क्व चिन्ता
हन्ताभीरीः स्मरतु स कथं संवृतो नागरीभिः ॥१६॥

आस्तामेतन्मम किमनया कूटकल्यानुवृत्त्या
सारं फल्गु प्रियमथ परं पथ्यमन्यादृशं वा ।
धर्माधीनैरिति मम वचः पुण्डरीकाक्षसाक्षाद्
आख्यातव्यं यदनुकरणे कुत्रचिन्नैष दोषः ॥१७॥

विख्यातोऽभूर्दिनकतिपयं नन्दसूनुर् यशोदा
नैवानन्दी व्रजजनपतिर् वल्लभो वल्लवीनां ।
अद्य ख्यातो मधुपुरपतिर् माधवीप्राणनाथः
सूनुः सौरेरगणितगुणो देवकीनन्दनोसि ॥१८॥

गोपीषूडुष्विव तव समो भोगकालः कलानां
भर्त्तुः कर्त्तुर्निखिलनयनानंदमिन्दोरिवासीत् ।
तासां मध्ये तदपि रमणी रोहिणीव प्रसिद्धा
सा त्वां नत्वा रहसि परमाकिञ्चना किञ्चिदाह ॥१९॥

इत्यनत्यैकपधिभिरपि स्निग्धसम्बोधनं ते
जायेतानन्तुदमुदयिनी रीतिरन्याद्य यद्वः ।
प्राक्संस्कारास्तदपि यदि मां तेनुबध्नन्ति दोषा
क्षन्तव्योऽयं भवतु भवता वाचिकप्रक्रियासु ॥२०॥

वाक्चातुर्य्यं त्वयि बत वृथा सन्ततान्तस्मरेण
ज्ञातं चेतश्चरितमखिलं मन्मथेन त्वया च ।
विस्रम्भैर्मे तदपि मथुरानाथ नेयं विरुद्धा
सन्तप्ताद्यैर्वचसि विदितं पौनरुक्त्यं न दोषः ॥२१॥

गोरक्षत्वं समजनि यदा तावकीनं तदैव
स्वच्छन्दत्वं तव तिरयितुं नाथ मामूम शक्ताः ।
वश्यः कस्य त्वमथ जगतानीश्वरिता किन्तु वाचा
माविष्कारैरदयहृदयग्रन्थिमुद्घाटयामि ॥२२॥
किन्ते जन्मान्तरमुपगतं पारसञ्चारकाले
धौतं नद्याः किमिदमथवा कार्मणीमाधुरीणां ।
विस्मर्त्तव्यं यदिह न तनौ यत्र बद्धः पशोर्
प्यत्र प्रेम्णि क्षणकतिपयैर्नाथ निर्लेपकोऽसि ॥२३॥
कर्त्ता कृष्णो नियतमधुना गोकुलं राजधानी
बन्धुभ्योपि प्रगुणममुना गोदुहो माननीयाः ।
काचिद्गोपी भवति महिषीत्युक्तमग्रे नवा कैः
तद्वैदग्ध्येन तु पितृवनप्रेतवत् कारिताः स्मः ॥२४॥
नीतेनामन्यपि च भवतः प्रस्नुवाना स्तनाभ्यां
बिभ्रत्यङ्के पुलकिनि भवद्वेणुवेत्रप्रतोदान् ।
सोरस्ताडं न वहतु तवाक्रन्दमम्बा कथं वा
यस्मादद्य प्रशमितपरो राजराजेश्वरोसि ॥२५॥
तैरुत्साहैः क्व खलु चलितं कुत्र ते नर्मवादाः
कण्ठो भग्नः करुणकरुणैस्तात कृष्णेति शब्दैः ।
पर्वस्वन्तः किमपि विरुजन्नाममात्रानुकारी
विच्छेदस्ते तमपि कृतवान् नन्दमस्पन्दमेव ॥२६॥
दोहः प्रायो न भवति गवां दोहनं चेन्नपाकः
चोराणां स्यात् स भवति यदा दुर्लभं तद्दधित्वं ।

दध्नः सिद्धौ क्व खलु मथनं मन्थने क्वोपयोगस्
तक्रादीनामिति गतिरभूदद्य गोधुग्गृहेषु ॥२७॥
तन्न क्षौणीखुरविलिखनं वप्रभङ्गो न शृङ्गैर्
नैवास्पर्द्धी नवजलमुचां घोरहम्बानिनादः।
कामोन्मादैरुदयति न वा सोपसर्य्या सपर्य्या
नामाबाहा मधुपुरपथादन्यदालोकयन्ति ॥२८॥
वत्सालोकस्मरणसुलभप्रस्नवप्लावनीयं
धूलीजालं नयनसलिलैरध्वसु प्लावयन्त्यः।
त्वामन्विष्य ब्रजपुरसरित्तीरभूषु भ्रमन्त्यः
सद्योजातानपि सुरभयो नार्भकान् पाययन्ति ॥२९
निम्रेमाणो ललितयवसश्यामसीमन्यरण्ये
न्यस्य न्यस्य त्वदनुसृतये चक्षुषी दिक्षु दिक्षु।
आजिघ्रन्ति व्यथितमनसः किञ्च सिञ्चन्ति बाष्पैः
क्रीड़ानीपं तव यदुपते वत्सला वत्सतर्य्यः ॥३०॥
भास्वत्कन्याकमलविपिनं कर्णिकाशेषमेतद्
वृन्दारण्यद्रुमकिशलयाः पाण्डुपत्री भवन्ति।
शस्यैः पङ्कैः पिहितमभितस्त्वद्विलासानुकूलं
मूलं धत्ते स तव कमलाकान्त केलीकदम्बः ॥३१॥
ये वै गोवर्द्धनधर तव स्निग्धगम्भीरघोषैः
केकावाचस्तिमितनयनास्तेनिरे ताण्डवानि।
अद्य प्रावृड्वनघनघटागर्ज्जितेपि प्रवृत्ते
भुग्नग्रीवाः किमपि नहि ते पुच्छमुल्लासयन्ति ॥३२॥

यस्य स्कन्धोमसृणसुरभिस्तारकैरङ्गसङ्गैर्
यत्नास्माकं सिचयनिचयं चोरयन्नुत्थितोऽसि ।
यस्याधस्तात्तव चरणयोश्चक्रचिह्ना धरित्री
धन्यो नीपः सममभवदसौ देव दुग्धं दृशौ नः ॥३३॥
पाण्डुच्छायाः कुसुमरजसा स्रङ्गमाला जटालाः
संवीताङ्गाः किशलयरुचा पाटलेनाम्बरेण ।
भोगाभावादपगतरुजः पावनाभ्यासभाजः
सर्व्वे वृन्दावनविटपिनो योगिचर्य्यां चरन्ति ॥३४॥
श्टङ्गस्वानप्रियसखसमाहूतिगोरचहिक्काः
प्रत्याख्याय व्रजपुरपथस्योपकण्ठे विशिष्य ।
स्रग्गोतद्भाष्याः सह सुरभयस्तोककृष्णादयस्ते
सायं प्रातर् नगरसरणौ चौरवत् सञ्चरन्ति ॥३५॥
विस्मृत्य त्वन्मधुपुरगतिं वासरान्ते पुरान्तः
श्रीदामादौ विशति विशती हस्तहैयङ्गवीना ।
वत्स क्वासि क्व च मम सुतेत्युन्मदेव भ्रमन्ती
त्वामप्राप्य व्रजपतिवधूः क्रन्दयत्यश्मनोऽपि ॥३६॥
वीतासङ्गाः शयनवसनस्नानपानाशनादौ
गायन्त्यस्त्वच्चरितगुणिताः सन्ततं गीतगाथाः ।
औदासीन्यं किमपि सकला बन्धुवृन्दे वहन्त्यो
गोप्यो लीलाच्छितिषु भवतो योगिनीवत् भ्रमन्ति ॥३७
स्वार्थं नैतत् समुचिततया वच्मि कर्मातितीव्रं
सद्यं यस्मिन्नजनि समये नाथ यातः सकालः ।

अद्य त्वय्यन्त्रिभुवनवशीकारमाधुर्य्यधुर्य्ये
त्वच्चातुर्य्यं न भवति यथा लाञ्छनं तद्विदध्याः ॥३८॥
एकैकाभिर्विहितमसकृत् तत्तत्रेहानुगत्यं
यस्मै कस्मिन्नपि गणयति क्रीतमात्मानमन्यः ।
धिग्वैदग्ध्यं तव तदिह ताः सिन्धुपारे विहाय
स्मैरी वैरी परमइव यन्निर्भरं निर्वृतोसि ॥३९॥
कूलक्रोडे तपनदुहितुश्चारुपङ्के निमग्नं
यत्नादुत्थापितमथ कृतोपरिक्रियं कौशलेन ।
न्यस्तं पीठे तव चरणयोश्चक्रचिह्नं पदं तत्
शालग्रामोपलमिव सदा मद्विधाः पूजयन्ति ॥४०॥
युक्ता सर्वात्मनि मयि मनः सच्चिदानन्दरूपे
चेतस्तापं जहित न हितः कश्चिदेवाङ्गसङ्गः ।
इत्युद्देशान् कथयसि वृथा मद्गतां मालिनीनाम्
एते हि त्वद्विरहशिखिनः सामिधेनीं भजन्ति ॥४१॥
वेशे वाच्यं तदपि सुदिरश्याम सावर्ण्यतस्ते
मुग्धा हस्ते मरकतमयो कङ्कणश्रेणिरीदृक् ।
अङ्गालेपो मृगमदरसैः स्निग्धनीलं दुकूलं
सर्वाङ्गीनं व्रजपुरजुषामङ्गनानामिदानीं ॥४२॥
साक्षाद्दीक्षां घटयति घनश्याम यत्ते कुतस्तत्
तल्लावण्यं कथय कृतिना केन चित्रेण लेख्यं ।
अक्रूरस्यागमनदिवसान्निद्रया नाथ नष्टं
कुत स्वप्नः शिव शिव दृशौ वाष्पदृष्टैर परं नः ॥४३॥

दत्तस्वप्नो भवसि यदि मे दर्शनीयः कदाचिद्
वर्हापीडं मधुरमुरलीधाम तद्धाम दध्याः ।
अस्मादन्यद् यदि वितनुषे दीयते दिव्यमुग्रं
पादस्पर्शः पुरमृगदृशां दुर्लभस्तत्त्वत्र स्यात् ॥४४॥
मद्भावेन स्थिरमथ चरं भावयन्त्यो भवत्यः
सन्तुष्यन्तु त्वमिति बहुधा सत्वमस्मानवादीः ।
आख्यातव्यं किमिह भवतः किन्त्विदूनो नवासौ
नैवास्माकं मदयति मनो नामनीलाम्बरोपि ॥४५॥
व्यक्तीभूतः स्वयमयमसि स्लाघनीयः समृद्ध्या
कुब्जीषु त्वं कथमिह परीतोऽप्रमस्मासु यायाः ।
तत्तद्दन्धुप्रकरपुरतस्तत्र कापि त्रिवक्रा
कृत्वा यत्त्वामधिनिवसनं नाथ निम्नी चकार ॥४६॥
गव्यस्तेन प्रथममुदभूर्वत्सपालस्य पश्चात्
तक्रेदानीं तदनु तदनु छिद्रनौकर्णधारः ।
लुण्ठाको भूदथ कुलवधूजातिजीवार्थसाथ
धिग्धातारं भवति निहितो येन भूचक्रभारः ॥४७॥
भक्तिप्रीतिप्रणयसहितं मानदम्भाद्यपेतं
चेतोऽस्माकं गुणवदगुणं गोदुहां देहमेतत् ।
विक्रीतं ते युगपदुभयं स्वीकृतञ्च त्वयाथो
हृद्गल्लासि त्यजसिच वपुर्नाथ कोऽयं विचारः ॥४८॥
यत्राधर्मः प्रसवतितरां यत्र भूयाननर्थो
यत्राकामः सपरमुदयी यत्र ते नास्ति मोक्षः ।

त्यागे तस्मिन्नपि परिजने गोचरे यत् त्वनर्थी
तस्मादर्थी भवति विदुषां पौरुषव्यत्ययोपि ॥ ४९ ॥

शैलोद्धर्त्ता दमितभुजगः पीतदावाग्निचक्रो
माद्यन्नागायुतबलगजाधीशभोजेन्द्रहन्ता ।
स त्वं दोषेष्वसति कुरुषे किङ्करीणाममद्रं
वक्तुं नास्ते जनइति न भोः कर्त्तुमेवं युनक्ति ॥५०॥

लोकातीतं यदिह कुरुते कर्म किं धर्मधारा
तेन त्याज्या किमिह विहितं श्रीमता राघवेन ।
त्यक्ता सीता तदपि सुचिरं सैव हैमी प्रियाभूत्
त्यक्ता यस्मिन्नहनि तु वयं तत्र कुजारतोसि ॥५१॥

व्यावर्त्तध्वं स्वभवनमितः कुत्र रे यात मुग्धा
स्त्वज्वोरद्य स्पृशतु सकथं वल्लभः कुब्जिकायाः ।
सम्भूय त्वच्चरणकमलस्पर्शलोभेन यान्तीर्
इत्थं गोपीः पथि पथि बलादध्वगा व्यरुन्धन् ॥५२॥

पीयूषात्मा तव कुलगुरुर्जन्मदातात्रदातो
माता याभूदियमपि जगत्पावनोति प्रसिद्धं ।
एकैकन्ते जयति जगदानन्दि चित्रं चरित्रं
कस्मादेवं विरहदहने देव दासीर्जुहोषि ॥५३॥

स्वामी वामी भवति यदि तत्सन्निधौ सञ्चरिष्णुः
पथ्यं प्रत्यापयति समयः सोयमीशानयानां ।
लोकद्विष्टं किमपि भवते कुर्वते युक्तवादी
साधुस्तस्मिन्न किमु मथुरामण्डले कश्चिदस्ति ॥५४॥

येनागत्य त्वमपि मथुरां यानमारोप्य नीतो
यस्याविष्टस्तव चरणयोश्चक्रचिह्ने लुलोठ ।
अस्माकं त्वद्गमनसमये सा दशा येन दृष्टा
सोऽपि स्वामिन् किमपि करुणाकातरो न ब्रवीति ॥ ५५ ॥
अस्मन्मर्मच्छिदुरमकरोत् कृत्यमत्युत्कटं यत्
कंसस्तेन त्रिभिरपि दिनैस्तत्फलं साधु लेभे ।
त्वामुत्थाप्य त्वरिततुरगं येन यानं वितेने
किञ्चित्तस्य प्रभुवर कुतः श्रूयते नाधुनापि ॥ ५६ ॥
श्यामं तेजः प्रकृतिविमलत्वेन संक्रान्तमेवं
प्रत्यक्षञ्च व्यवधिबहुलं विश्वरूपप्रकाशि ।
आन्ध्यं जन्मावधि जनयताशेषलोकैकरत्नं
हाहा तेन त्वमपि मुषितं तारकं चक्षुषो नः ॥ ५७ ॥
सूक्ष्मं सूक्ष्मादपि च कलयन्नन्धवच्चेष्टते यो
नान्ध्यं तस्मात्तिरयति रवैरश्विनीनन्दनोऽपि ।
विज्ञातुं सत्त्वमपि रचयन्नेवमङ्गव्यवस्थां
वक्रीकार्यैः कथमिव दृशा किं परं दूषयामि ॥ ५८ ॥
तत्ते चित्तं शरणमपि नः सर्वतो भद्ररूपं
व्यावृत्तास्मान् वसति बलवन्नागरीवृन्दमत्र ।
वैदग्ध्यं ते किमिदमधुना तद्बहिर्वीथिकान्ते
वासोऽरासोत्सवनट विभो दुर्लभो यन्ममापि ॥ ५९ ॥
किं नो दृष्ट्या न किमशनिभिर्भूभृता वाहताः स्म
किं न लुण्टाद्वज्रतवह्नैर्दंशिता किं न सर्पैः ।

प्रेम प्रौढं किमपि जनयन्नव्यलीकाश्च मुञ्चन्
अञ्चन्नेवं कथमपयशो घोरमङ्गी करोति ॥६०॥
अस्मत्प्राणास्तव पदनखच्छायनीराजनाय
तं यातोमूः सपदि यदि ते यान्ति को वा विषादः ।
एकं किन्तु व्यथयति मनश्छद्मना किङ्करीणां
प्राणान्निन्ये यदुपतिरिति त्वद्गता किं वदन्ती ॥६१॥
सङ्कोचो य स्तव गुरुजने यश्च पौराङ्गनासु
व्यक्तीभूतं यदुभयमभूत् कुब्जिकोपग्रहेण ।
अस्मानेव क्षिपसि सहसा देव दूराद्द्वीयः
कर्त्तुं यः पारयति स कुतो किं करोत्येवमेव ॥६२॥
एतस्मादप्यधिकमधिकं यत्तदस्मासु कुर्या
न स्वप्नेपि त्वयि विसदृशं चिन्तयत्येतदन्तः ।
दन्ते धृत्वा तृणमिति महासभ्यमभ्यर्थयामि
स्वामिन्नेवं नहि मधुपुरीं चीणमध्यां विदध्याः ॥६३॥
द्रोणीरादौ मलयजयुता शोचिताः सञ्चिनुध्वं
वापीर्निम्नी कुरुत धतशो लालशैवालपूर्णा ।
सख्यं सख्यो यदि यदुपतौ पातनीयं तदेति
प्रेष्या वश्यो मिलति यदि तन्मायुरीर्वैदयिष्ये ॥६४॥
सौभाग्येन व्रजकुलवधूसार्थसीमन्तरत्नं
या कंसारेरतिगुणवती स्कन्धमप्यारुरोह ।
सेयं राधा किमिदमिति मामुद्दिशन्त्यङ्गुलीभिः
लोकानोन स्वलितनयनाः शाखिनो रोदयन्ति ॥६५॥

यो विद्यायां तपसि भवतो ज्येष्ठएवादिदेवो
मादृग्मायाविभव भवता वञ्चितः सोऽपि दृष्टः।
या त्वामम्बा शरणमविग्रहङ्कञ्चकश्चापि तस्यास्
त्वामुद्दामा कथय न कथं लोकलज्जा रुणद्धि ॥६६॥
आदावेव क्षणसुखकरं कृष्ण कल्पान्तभोग्य
केशारम्भि त्वयि मम महत् पातकं प्रेम मन्ये।
प्रायश्चित्तं भवति नच मे दुर्गताया विधेयं
तेनैव त्वामहमविरतं सानुतापा स्मरामि ॥६७॥
मातुर्नापि स्मरणमियता लङ्घितं लौकिकं ते
धर्माधीनो यदसि तदपि व्यक्तमेतावतैव।
किञ्च ब्रूते तव रसिकतां निग्रहः कामिनीनां
को जानीते कितव भवतः कुत्र तात्पर्य्यमस्ति ॥६८॥
तत्त्वज्ञानं कथय शतधा प्रेषय प्रेषलक्षं
चिन्तारत्नं वितर कुरु वा सानुतापप्रसङ्गान्।
यावद्दोर्भ्यां तव नवघनश्यामलं धाम गाढं
नाश्लिष्यामि त्रुटति नहि मे तावदेवैष तापः ॥६९॥
लक्ष्मीकान्तं कतिचन चिदानन्दमन्ये विदुस्त्वां
मायाकारं कतिचिदपरे साधकाः सिद्धिभाजः।
योवाप्यत्रा भव नवघनश्याम तस्यैव धाम्नो
दासीभूता वयमिति परे वन्ध्यकल्पा विकल्पाः ॥७०॥
नायासि त्वं नच नयसि मामात्मनः पादमूलं
नोवा दूतं विसृजसि नवा लेखलेशं ददासि।

निश्वासाग्निर्निपतति न ते काचिदाश्वासवार्त्ता
कस्मिन्नाख्यामुपहितवती जीवितं धारयामि ॥७१॥
यत्पूर्वं द्युर्गमनदिवसान्मानभङ्गाभिलाषी
लक्ष्मीकान्त त्वमपि पतितः पादमूले ममासीः ।
स्पृष्टोऽङ्गुल्या तदपि न मया नापि नेत्रान्तपीतं
चित्ते शैल्यं सविषमिव तन्मामके सग्नमस्ति ॥७२॥
को जानाति त्वदपहरणक्रूरमक्रूरमाप्तं
कः प्रत्येति त्वमपि सहसा गोकुलं त्यक्ष्यसीति ।
त्यक्त्वा नायास्यसि पुनरिदं नाथ केनाप्यमेयं
मद्दुर्दैवान्यहह सुमहादुर्घटं साधयन्ति ॥७३॥
भूयस्त्वञ्चेन्मिलसि महिलासम्प्रदायं विहाय
हाभ्यां हाभ्यां युगपदपि तद्रूपमादौ ग्रहीष्ये ।
आश्लिष्य त्वामहह तदनु स्पन्दसम्बन्धहीना
कल्पक्रूरामपि निमिषतां यामिनीं यापयिष्ये ।
यत्राकाले कथमपि चलन्नन्दपत्नीकराञ्ज
व्यस्तन्यस्ते न च सुरुचिरं रोचनाचित्रकेन ।
आशीर्दुर्वाक्षतचितमनुस्मर्य्यमाणं मुखं ते
सर्वक्लेशापहमपि जगन्नाथ मर्म क्छिनत्ति ॥७५॥
न स्मर्त्तव्यस्तदयमदयः कर्हिचिद्बर्हचूडो
निश्चित्येति स्पृहयति मनो यावदर्थान्तराय ।
किं ते वैरं विहितमवरे कृष्ण कृष्णेत्यनन्तर
धारावाहिस्मरणपदवीं गाहसे तावदेव ॥७६॥

गुञ्जाहारं कतिचन तदापत्रभृङ्गाणि केचित्
केचिद्दर्हं न्तवकमपरे वेत्रमन्ये प्रतोदं ।
वंशीं काचित् त्वदधरसुधासारसौख्यलब्ध्यां
निन्युर्धन्या निजमतिविदुषी दीर्घमायुर्मृतास्मि ॥७७॥
आयास्यामि स्वयमिति पुरः प्रस्थितो यत् त्वयोक्तं
मय्येवाशु तमिव तदा नाथ निःक्षिप्तमच्छि ।
आस्थामत्र प्रणिहितवती प्राणिनीप्राणबन्धो
चिन्तावन्धीभवदथ भवेः सत्यसन्धो न वेति ॥७८॥
सेयं सिन्धुर्विकचकमलाकाननं फुल्लमेतन्
नीपस्त्वायं कुसुमनमितः श्रूयते भृङ्गगीतं ।
स त्वं साहं स च रतिपतिः किं वदामः परन्ते
भावाभिन्नः सपदि विदधे सर्वमन्यादृगेव ॥७९॥
योषित्त्वं रमय दमय द्वेषिणो दुर्विनीतान्
सम्भावयेधि प्रणयसुमुखो बन्धुवृन्दं पुराणं ।
क्लेशानेषा वहतु बहुशः कान्त किं तेन वार्त्तां
कल्यानीते भवतु मम तु श्रोतुमेवेदमायुः ॥८०॥
यत्तन्मेस्तु त्वयितु चरितं युक्तिवर्त्मव्यतीतं
सम्पश्यन्ती किमपि किमपि प्राणबन्धो बिभेमि ।
दीना याचे विधिमहमतस्त्वत्कृते मन्त्रयन्ते
यद्गर्गाद्याः किमपि निपुणं तद्वचः सत्यमस्तु ॥८१॥
आगः कस्मिन्नहनि न कृतं तिष्ठतापि त्वयेह
प्रस्थानेन प्रकटितमथो वीर वैरं वरीयः ।

रूक्षत्वं नो न जयितुमिथानेव यत्नस्तवाभूद्
एतच्चेतस्त्वयितु न गुणादन्यदङ्गी करोति ॥८२॥
तुभ्यं दातुं विषमुपनता पूतनाघानि युक्तं
विश्वोन्माथिष्वपि समुचितो निग्रहः पूरुषेषु।
अत्रायोषित् प्रकृतिकृपणानन्यवृत्तिश्च याते
तत्रोन्माथे किमपयशसः पातकाद्वान्यदस्ति ॥८३॥
सम्भोग्योभूर्दिनकतिपयं माद्दशीनामथ त्वं
माधुर्य्यञ्चेद्दिनकतिपयं भुञ्जते सह्यमेतत्।
अस्माभिर्यो भवदनुभवः सोपि सर्वात्मना यन्
निःसंस्कारः समजनि मनो दग्धमेतावतैव ॥८४॥
तुल्याकारं समनु भवतोरत्र दुःखं सुखञ्च
क्रीडाकारी त्वमहमिति नो शब्दभेदोपि जातः।
स त्वं योषित्कुलरतिगुरुः साहमेवं वराकी
सा किं नाहं त्वमसि न स किं नाथ किं जातमेतत्॥८
धैर्य्या काचित् कतिसन सखी ग्रित्तया लज्जयान्ये
भीत्या काचित् कतिचन रुषा काचिदालस्यतोपि।
स्वाधीनेपि त्वयि रतिगुरौ केलिकुञ्जावलम्बिन्य्
अस्वाध्यायाः कति कति निशामादृशामत्र नासन्॥८
दूरं दूरादपि च विषमं कञ्चिदैत्य प्रहारं
कुर्वन्नेकं पशुमिव जगन्नाथ किं नावधीर्मां।
वाटीसीमप्रसरणपटुः श्रूयमाणैरजस्त्रं
किं दुःशीलप्रहरणशतैरङ्गमङ्गं लुनासि ॥८७॥

सोढव्यस्ते सकलमधुना संस्तवब्रह्मचर्य्या
राजर्षिस्त्वं कलयसि यदि स्वीयवंशानुरूपं ।
लज्जाः श्रोणीः पुरयुवतिषु श्रूयमाणा नवीना
किं कुर्य्याम स्पृशति हृदयं शाश्विता सर्व्वतेव ॥८८॥

यान्ति प्राणा नहि वहिरमी रुद्ध्यमानाश्च गाढं
सत्यं गत्यन्तरमपि न मे किञ्चिदस्ति स्वसत्याः ।
मग्नं चेतः कुलिशकठिने त्वय्यनुद्धार्य्यमेतत्
तेनैवाहं भवदनुगतिं सुस्थिता किं करोमि ॥८९॥

किं नो दण्डप्रहररजनीपक्षिणी पक्षरीत्या
स्फीतस्फीतां विरहविपदं साहयन्नामहासीः ।
दत्तो यस्मै न खलु निमिषो दृष्टिविघ्नोऽपि तस्यै
दूरस्थित्यै वितरसि विभो यौगपद्याद् युगानि ॥९०॥

स्वामिन्नेकं वचसि भवतः स्वान्तविश्रान्तमन्यत्
कर्म्मण्यन्यन्मुहुरिदमभिव्यक्तमन्योऽपि वेद ।
भूयो भूयस्तदति मुषिता नाम गृह्णामि किं ते
तिष्ठत्यस्मिन् जगति यदि नो जीवनस्थानमन्यत् ॥९१॥

त्वत्सेवासु स्खलनमभवन्माद्दृशः कस्य किम्वा
सेवाधर्म्मो गहन इति यन्नीतिनिष्ठाः पठन्ति ।
तेन त्यागः किमयमुचितो वच्मि सङ्कोचहीना
पान्थो यत्र त्वमसि रसिकैरोचितो नैष पन्थाः ॥९२॥

पाण्डुक्षामं वपुरिदमसौ कुन्तलाः क्लान्तभासो
वासोऽप्येवं विषमिति भिदा भिक्षुकीभिः कुतो नः ।

एषा क्रोशाः कतिच मथुरा यामि चैदद्य किं तन्
नेतोऽन्यं न भवति कृतिः श्रीमुखालोकनाय ॥६३॥
कुञ्जद्वाराद्बहिरपि यदि प्राणनाथ प्रयासि
प्राणैः स्थेयं क्षणमपि तदा नैव मे सत्यमेतत् ।
भूयोभूयो विलुभितवती त्वामिति ध्वस्तलज्जा
दूराद्दूरं कथमतिचिरादाननं दर्शयिष्ये ॥६४॥
त्वञ्चेदानीं नगरतरुणीसार्थसर्वस्वभूतस्
ता अप्येवं तव किमितरास्तुभ्यमद्य स्वदन्ते ।
अत्यौत्सुक्यात्तदपि भवतः संमुखी वा यदि स्यां
किं स्यादेतन्न खलु निपुणं भावयन्त्यप्यवैमि ॥६५॥
न स्यादस्या यदि मम तनोः प्रत्यभिज्ञेयता वा
स्यादेवाथ स्फुटमुभयथा मामकीनो विडम्बः ।
आद्ये मासि व्यथयति भवतो दृष्टिरौदास्यमुद्राम्
अन्यत्रापि प्रणयलघुता तादवस्थ्यं व्यनक्ति ॥६६॥
सांमुख्यं ते भवति यदि मे तद्गृहे वा बहिर्वा
सौजन्येन स्मरसि यदि तत् सा कथा दुर्लभैव ।
पूर्वावस्थास्मरणलघिमा दुर्निवारः सभायां ।
शुद्धान्ते चेच्चतुरतरुणीसार्थसौहार्दभङ्गः ॥६७॥
दूरादेव स्मिततरसुधासिच्यमानाधरौष्ठं
गण्डोदञ्चत्पुलककमलाकारविस्फारदृष्टि ।
एह्येहीति स्वयमथ भवतः प्रेयसः प्रार्थनं या
लेभे तस्यामनतिशयनी माननैवापमृत्युः ॥६८॥

कुब्जालोकाः कटुकुवचसः स्वालये सर्व्व एव
क्षीणासि त्वं कथमिति वहिर्ग्राम्यवाचो वदन्ति ।
ग्रामस्यान्ते तपनतनयाकूलमुद्यानमूलं
शून्यं लीलाशरणमपि ते कुत्र तन्निर्वृणोमि ॥९९॥
वैमुख्यन्ते किमपि मदनो माद्यति क्रूरकर्मा
नर्मालापेष्वपि कुवचनैर्बाधते बन्धुवर्गः ।
चेतो नाथ त्वयि विनिहितं वाचमुल्लङ्घ्य यासा
मासामुक्तिः स्मितकलुषिता कल्पते किं करोमि ॥१००॥
कुञ्जे कुञ्जे रतिरुपहिता धिक्कृतं धाम धौतं
मग्नं वेणोर्वचसि विहितो बन्धुवाचां विसर्गः ।
दृष्टः स्वामी कपिरिव कृतः प्राणसारोऽसि जारो
हीनोपाया कथमहममनद्य भूयो नियोक्ष्ये ॥१०१॥
एते नित्यं नवपरिमलोद्गारिणः सन्तु कुञ्जाः
सन्तु क्लेशा नच मम तनोरत्र वीभत्सभावः ।
एतद्दृष्ट्वा रमयति हरिर्गूढमागत्य राधाम्
इत्यद्यापि व्रजयुवतयोमह्यमीर्ष्यां वहन्ति ॥१०२॥
राधे राधे कथय कथय त्वय्यसौ नन्दनो मे
बाल्यादेव प्रभृति कुरुते वत्सलो हत्प्रकाशं ।
द्रष्टव्योऽसौ पुनरपि मया मन्यते कीदृशं वा
मानिन्यम्बा तव च रुदती पृच्छति रुन्दतीति ॥१०३॥
अत्रागच्छ त्वरितमथवा तिष्ठ तावद्व्रजत्वं
पृष्टवन्तोऽत्र ते जनपदजना मुक्तकण्ठा ब्रवीमि ।

यामि स्वर्गं निरयमथवा प्राणिमीह म्रियेवा
श्यामादन्यो नहि नहि नहि प्राणनाथो ममास्ते ॥१०४

राधाबन्धुःलिखितपठितो विश्रुतो यत् त्वमासोः
साहं साहंकृतिकदभवं यत्त्वयातिप्रियेति ।
लक्ष्मीकान्त प्रणयसुधया सिञ्च वा मां नवा त्वम्
एतज्ज्ञातं ननु मम जनुर्धन्यमेतावतैव ॥ १०५॥

यान्ति प्राणा मम यदि न ते प्रच्छनीयः पुरोधा
देया मह्यं किशलयरुचा पाणिनैव त्वयापः ।
याचे तव व्यवधिकृतिनः क्षालनं क्षारनीरैः
कर्त्तव्यं ते मधुपुरवधूपादलाक्षारसस्य ॥१०६॥

सीदत्यङ्गं दलति हृदयं किं नु कुर्वन्ति हन्त
प्राणाश्चरामाश्रय मम वधामद्भागी त्वमेव ।
हाधिक् कीदृग् वदसि रसने तत्वतो यत्तदास्तां
वन्दीभूय स्वयमिह मया मोचितः प्राणनाथः ॥१०७

श्याम श्यामस्मर सहचरी मन्दकारी कृतं मे
केनाकस्माद्भ्रमति भुवनं मज्जति द्यौरवन्यां .
काहं क्वाहं क्व मम दयितः कुत्र तस्यैष दासो
हा हा हा हा हरि हरि हरि क्षीणमध्यप्रसीद॥१०

इत्युद्गाङ्कर् विमलपुलकाकम्पनासन्नकण्ठी
छिन्ना मूले पतति भुवि सा हेमवल्लीव यावत् ।
भृङ्गारैस्तैः शिशिरसलिलैस्तावदेवोद्धवोऽस्याः
सिञ्चन्नास्यं तदुपरि विधोरुत्तरीयं दुधाव ॥१०९॥

चक्रे चैतन्मनसि चतुरास्येटकाश्चक्रपाणेर्
लब्धं यस्मात्तदपि यदसौ मामिहैकं न्ययुङ्क्त ।
एतत् सम्भावनसमुचितं साध्वभून्नैपुणं मे
यद्रक्षायामहमधिकृतो नाधितेयं मयैव ॥११०॥
सम्यग्जातं सुचिरविरहज्वालया दूयमाना
सेयं साध्वी विशति परमानन्दधामन्यनन्ते ।
मन्त्री वैज्ञानिक इति वृथा मानमासाद्यमाद्यन्
अद्य स्वीयां मतिपरिणतिं बुद्धवानुद्धवोपि ॥१११॥
ध्यायन्नेतन्मधुपुरपतिर्मंस्यते कीदृशं मां
किं वा भावी कथमिव मया दर्श्यतामास्यमस्मै ।
ध्यायन्नेतत् पुलकमुकुलारम्भिसस्पन्दतारं
पश्यन्नस्या मुखमकथयत् प्राणिति प्राणितीति ॥११२॥
नष्टं प्राप्तं निधिमिव मुखं वीक्ष्यमाणोऽयमस्या
भूयः सिञ्चन्मधुपुरपतेरुत्तरीयानिलेन ।
उच्चैराह श्रुतिपरिसरे किङ्करं कंसशत्रोर्
दूतं राधे त्वयि विनिहितं विद्धिमामुद्धवोस्मि ॥११३॥
सातिस्वादुर्दवथुदमनी तुल्यपीयूषवाणी
वर्णश्रेणिः श्रवणपुटके नान्तरस्या विशन्ती ।
को जानीते किमकृत परं सत्वरं सापि तन्वी
किञ्चिं किञ्चिं कथय कथयेत्युत्थिता कौतुकेन ॥११४॥
आदावस्यै मलयजजलैर्मर्मरीभूयमन्तर्
म्लानाभोगं नयनपयसः प्रोञ्छनात् साञ्जनस्य ।

किञ्च प्रोतं बहुभिरभितः शुष्कशैवालखण्डैः
सारं शौरेरखिलमपि तद्वर्णयामास भूयः ॥११५॥
पश्चादूचे पुनरयमिदं चेलवल्लीं धुनानस्
तस्मादस्याः शपथशतकैः सन्निवृत्तः कथंचित्।
लक्ष्मीर्यस्मान्निवसति वहिस्त्वं तदन्तर्निमग्ना
मन्योरन्यो भवतु विषयः सा किमेवं विधासि ॥११६॥
धाराबाहि व्यसनकथनाद्भूतवत्याः प्रियायाः
रुक्ता सक्तिव्यवधिभवतो यन्न मध्ये मयोक्तं।
मौढ्यादेवं मम किमु महानेव न स्यादनर्थस्
तस्यायं चेद्रसनपवनः पावनो नाभविष्यत् ॥११७॥
यस्ते मग्नो मनसि हृदये यस्य च त्वं विलीना
मन्यन्ते यच्चरणशरणा भूतिमैन्द्रीं तृणाय।
यस्यालाभात् पुरयुवतयो नालशैवालशय्याः
सूर्य्या गर्जज्वलितवपुषो यामिनीर्यापयन्ति ॥११८॥
यस्याद्य त्वद्विरहदहनज्वालया पाण्डुभासो
वासो नीलं गमयति भिदामम्ब नीलाम्बरेण।
दासो दासोत्सवनटगुरोरस्य सोहं समोहं
स त्वामावेदयति यदिदं मन्मुखेन प्रतीच्छ ॥११९॥
दैवादद्य प्रतिपदमितो विस्मृतो बन्धुपाशैर्
देहेनैव द्विजपदमनुप्रापितः संयतोस्मि।
यस्मिन् वाले तपनतनयाकूलकुञ्जान्तराले
चित्तेन त्वं विरमति न मे किन्तु केलीविनोदः ॥१२

साक्षाद्दीक्षा न भवतु चिरं चिन्तिता तेन माभूद्
दैवाधीनो गमयति जनः कोऽपि कुत्रापि कालं।
बन्धीभूतं मयि तव मनस्त्वय्यपीदं ममेति
द्वाभ्यामाभ्यां मिलनमचिरादावयोः साधनीयं ॥१२१॥

राधे राधे क्व चलसि मनाक् तिष्ठ कल्याणि कुञ्जे
प्रातर्जातं नहि नहि निशा सावशेषाधुनापि।
इत्यावेशप्रलपितशतं मद्गतं देवि दिग्भ्यः
सम्प्राप्तास्ते कथयितुममी साक्षिणः सन्ति सभ्याः॥१२२॥

रुद्धा बन्धुप्रणयपदवी लङ्घिता लोकलज्जा
मूर्ध्नि न्यस्तं पदमयशसः शङ्कितो नापमृत्युः।
मामाराद्धुं किमिव न कृतं दुष्करं त्वद्दृशोभिस्
त्यक्त्वा युष्मान् मम यदुपतेरद्य राज्यं धिगस्तु ॥१२३॥

रथ्या हर्म्यावलिरियममी बन्धवः सानुबन्धाः
निर्वैरयं जयति नगरी गुम्फिता नागरीभिः।
एषा सम्पत्त् किमिह न सुखं किन्तु कान्तारकुञ्जौ
युष्माभिर्यः समजनि स मे दुर्लभो हृद्विनोदः॥१२४॥

नोपष्टम्भो गुणवति तव स्यादयं चेत्तदानीं
नाहं नासावतिनवघनश्यामलो देहबन्धः।
दुःखं क्वापि क्वचिदपि सुखं यच्छसि क्वापि मोहं
सर्वत्रैवं स्फुरति मम तु त्वन्मयो सृष्टिरेव ॥१२५॥

कुब्जाम्बज्ज्ञीमकरवमुरीकृत्य यन्निर्घृणत्वं
तत्तात्पर्य्यं विपुलमतयो नापयन्ति क्षतिः का।

हित्वा वेशं कुवलयदृशां केशमञ्चिभ्रुवं वा
वक्तव्या मे नहि कुटिलतेत्येतदुन्नायकं तत् ॥१२६॥
विद्युल्लोलं वपुरिदमितो यौवनादेः कथा का
दृश्यं मिथ्या सकलमिति मद्दासदासोपि वेद ।
किन्ते वक्ष्ये स्वयममुमहं नैव वक्तुं समर्थो
यज्ञोपीतत् प्रणयमदिरामत्तमात्मानमेव ॥१२७॥
उद्यन्नोत्रस्खलनमनिशं गोपिते गोपयिष्यन्
राधानाम्नीमकरवमहं सारिकामन्तिकस्थां ।
नीता राधे मम मुरलिकेत्येवमादीन्यकाण्डे
वक्तुं सभ्यस्मितजनयितुस्तन्मयासीददृष्टैव ॥१२८॥
अस्त्रं प्रस्वापनमपि मया लब्धमुन्निद्रकेण
यस्मिन्नेतन्निहितमथ ते स्वप्नसन्दर्शनाय
जाग्रद्भावे भवति भवती भावनीयैव धिङ्मे
तेनाशेषस्फुरणशमनी हन्त जाता सुषुप्तिः ॥१२९॥
याने प्राणेश्वरि मम यथा निर्विवादं तथा ते
सन्तप्ताया युगपदभियन्त्यद्य तन्वोरजन्यः ।
यास्यन्त्येता दिनकतिपयैरङ्गपल्यङ्कभाजोः
सत्यं सत्यं निमिषनिभतामावयोः सुस्थिताख्या ॥१३०॥
ज्ञातिग्रामो हसति निभृतं बन्धुवर्गो घृणाद्रि
क्रीड़ामन्तर्दधति गुरवो नीरवो भृत्यलोकः ।
चित्रीयन्ते किमपि सुजना दुर्जनाः कुत्सयन्ते
श्लाघन्ते मां सदसि रसिकाः सादरं त्वत्कथासु ॥१२

इत्यादिष्टं भुवनगुरुणा गौरवेण क्रियाणाम्
अत्रागन्तुं किमिव भयि ना भोक्तु मप्यक्षमेण ।
तामौत्सुक्यादिति स कथयन्नात्मनः पादमूले
निम्नासीनः सुरभिशिशिरं निर्भरं किञ्चिदाप ॥१३२
पश्यन्नेतत् किमिति कथयन्नश्रुधारामुदारां
मन्दाकिन्याइव तनुभृतः सुभ्रुवः सुस्थितायाः ।
हा हा जातं किमिति चकितः सत्वरं प्रोच्यपादौ
भक्तिश्रद्धासपुलकमुपादाय मूर्ध्ना ववन्दे ॥१३३॥
बुद्धा बद्धाञ्जलिपुटमिमां किञ्चिदाख्यातुकामाम्
इत्याचख्यौ विरमतु परं निष्फलो देवि खेदः ।
एतद्दासो नयति हरेः श्रीमदङ्घ्रिाधिरूढं
चेतोमूढं न कुरु करुणासागरे सङ्गतासि ॥१३४॥
भास्वानस्वानयमति क्षती खेलयन्नम्बरान्तर्
धर्मस्थित्यै भ्रमति भुवने तामसोन्मूलनाय ।
प्रादक्षिण्या झटिति विनतानन्दनाधीनयानो
रागी चिन्तां न कुरु कुरुते पद्मिनीनां प्रबोधं ॥१३५॥
गोपीमात्रं भुवनिलिपिनयान्माधवप्रेमपात्रं
मत्वा यत्त्वामनतिशयिनी दृष्टिरग्रे ममासीत् ।
क्षन्तव्यं तद्विधिविधिसुतव्योमकेशाब्धिपुत्री
स्रग्यः पाशे पशुरिव तव प्रेम्णि बद्धो यदस्ति ॥१३६॥
मातर्मातर्जय जय जगन्मोहनं मोहयन्त्याः
कस्ते तत्त्वं कलयतु न यद्वेदगर्भोऽपि वेद ।

 

मन्तव्योसौ परिजनतया वल्लभस्येति तस्यै
वारं वारं तदनु दधिरे तेन दण्डप्रणामाः ॥१३७॥
सर्वाङ्गीनं पुलकमुदभूदश्रुमग्रे च दृष्टो
कण्ठोभग्नस्वर इववचः पर्य्यवस्थानशून्यं ।
तस्यास्तस्याप्यजनि युगपद्यानकाले तदानीं
मुग्धा मूर्द्धन्यभवदुभयोरङ्गता पुष्पवृष्टिः ॥१३८॥
आमन्त्र्यैकस्तदनु सकलं घोषमुत्कण्ठमानः
सद्यो राधारमणचरणप्रेक्षणाय प्रतस्थे ।
मन्त्रं चिन्तामणिमिव पराचिन्तयन्ती चिराय
प्रेयः कृत्तं वनभुवि घनानन्दमग्नावतस्थे ॥१३९॥
नानारामप्रणयिषु मनः सङ्गसौभाग्यभाजा
जाड्यापाये सुरभिसमयस्थायिना माधवेन ।
राधाबन्धोरपहृतमिति प्रेममाध्वीकमेतन्
निर्विघ्नेन श्रवणपुटकैः पुण्यवन्तः पिबन्तु ॥१४०॥
विचारपारदृश्वानः कृतं कुण्ठधिया मया ।
करुणार्द्राः करिष्यन्ति शुद्धमुद्धवदूतकम् ॥१४१॥

इति तालितनगरनिवासी श्रीमाधवकवीन्द्र
भट्टाचार्य्य विरचितमुद्धवदूतं खण्डकाव्यं
सम्पूर्णमिति ॥



---

दुकूलं बिभ्राणो दलितहरितालद्युतिहरं
जवापुष्पश्रेणीरुचिरुचिरपादाम्बुजतलः ।
तमालश्यामाङ्गो दरहसितलीलाङ्कितमुखः
परानन्दाभोगः स्फुरतु हृदि मे कोऽपि पुरुषः ॥१॥

यदा यातो गोपीहृदयमदनो नन्दसदनान्
मुकुन्दो गान्दिन्यास्तनयमनुविन्दन् मधुपुरीं ।
तदामाङ्क्षीच्चिन्तासरिति घनघूर्णापरिचयैर्
अगाधायां बाधामयपयसि राधा विरहिणी ॥२॥

कदाचित् खेदाग्निं विघटयितुमन्तर्गतमसौ
सहालीभिर्लेभे तरलितमना यामुनतटीं ।
चिरादस्याश्चित्तं परिचितकुटीरावकलनाद्
अवस्थां तस्तार स्फुटमथ सुषुप्तेः प्रियसखीं ॥३॥

तदा निस्पन्दाङ्गी कलितनलिनीपल्लवकुलैः
परीणाहात् प्रेम्णामकुशलशताशङ्कितहृदयैः ।
दृगम्भोगम्भीरीकृतमिहिरपुत्रीलहरिभिर्
विलीना धूलीनामुपरि परिवव्रे परिजनैः ॥४॥

ततस्तां न्यस्ताङ्गीमुरसि ललितायाः कमलिनी
पलाशैः कालिन्दीसलिलशिशिरैर्वीजिततनुं ।

परावृत्तश्वासाङ्कुरचलितकण्ठीं कलयतां
सखीसन्दोहानां प्रमदभरशाली ध्वनिरभूत् ॥५॥
निधायाङ्के पङ्केरुहदलविटङ्कस्य ललिता
ततो राधां नीराहरणसरणीन्यस्तचरणा ।
मिलन्तं कालिन्दीपुलिनभुवि खेलाञ्चितगतिं
ददर्शाग्रे कंचिन्मधुरविरुतं श्वेतगरुतं ॥६॥
तदालोकस्तोकोच्छ्वसितहृदया सादरमसौ
प्रणामं संशन्ती लघु लघु समासाद्य सविधं ।
धृतोत्कण्ठा सद्यो हरिसदसि सन्देशहरणे
वरं दूतं मेने तमतिललितं हन्त ललिता ॥७॥
अमर्षात् प्रेमेर्ष्यां सपदि दधती कंसमथने
प्रवृत्ता हंसाय स्वमभिलषितं शंसितुमसौ ।
न तस्या दोषोऽयं यदिह विहगं प्रार्थितवती
न कस्मिन् विभ्रमं दिशति हरिभक्तिप्रणयिता ॥८॥
पवित्रेषु प्रायो विरचयसि तोयेषु वसतिं
प्रमोदं नालोके वहसि विशदात्मा स्वयमसि ।
अतोऽहं दुःखार्त्ता शरणमबला त्वां गतवती
न भिक्षा सत्पक्षे व्रजति हि कदाचिद्विफलतां ॥९॥
चिरं विस्मृत्यास्मान् विरहदहनज्वालविकलाः
कलावान् सानन्दं वसति मथुरायां मधुरिपुः ।
तदेतं सन्देशं स्वमनसि समाधाय निखिल
भवान् क्षिप्रं तस्य श्रवणपदवीं सङ्गमयतु ॥१०॥

निरस्तप्रत्यूहं भवतु भवतो वर्त्मनि शिवं
समुत्तिष्ठ क्षिप्रं मनसि मुदमाधाय सदयं।
अधस्ताद्धावन्तो लघु लघु समुत्तानन्यनं
भवन्तं वीक्षन्तां कुतुकतरला गोपशिशवः ॥११॥
किशोरोत्तंशोऽसौ कठिनमतिना दानपतिना
यया निन्ये तूर्णं पशुपयुवतीजीवितपतिः।
तया गन्तव्या ते निखिलजगदेकप्रथितया
पदव्या भव्यानां तिलक किल दशार्हनगरी ॥१२॥
गलद्बाष्पासारप्लुतधवलगण्डा मृगदृशो
विदूयन्ते यत्र प्रबलमदना वेशविन्यासाः।
त्वया विज्ञातव्या हरिचरणसङ्गप्रणयिनो
ध्रुवं सा चक्राङ्की रतिसखशताङ्कस्य पदवी ॥१३॥
पिबन् जम्बुश्यामं मिहिरदुहितुर् वारि मधुरं
मृणालीर् भुञ्जानो हिमकरकलाकोमलरुचः।
क्षणं हृष्टस्तिष्ठन् निविड़विटपे शाखिनि सखे
सुखेन प्रस्थानं रचयतु भवान् कृष्णनगरे ॥१४॥
बलादाक्रन्दन्तीरथपथिकमक्रूरमिलितं
विदूरादाभीरीततीरनुययौ येन रमणं।
तमादौ पन्थानं रचय चरितार्था भवतु ते
विराजन्ती सर्वोपरि परमहंसस्थितिरियं ॥१५॥
अकस्मादस्माकं हरिरपहरन्नंशुकचयं
यमारूढो गूढ़प्रणयलहरीं कन्दलयितुं।

तव श्रान्तस्यान्तःस्थगितरविबिम्बः किसलयैः
कदम्बः कादम्ब त्वरितमवलम्बः स भविता ॥१६॥
किरन्ती लावण्यं दिशि दिशि शिखण्डस्तवकिनी
दधाना साधीयः कनकविमलद्योतिवसनं ।
तमालश्यामाङ्गी सरलमुरलीचुम्बितमुखी
जगौ चित्रं यत्र प्रकटपरमानन्दलहरी ॥१७॥
तया भूयः क्रीडारभसविकसद्वल्लवबधू
वपुर्वल्लीम्भश्यन्मृगमदकणश्यामलिकया ।
विधातव्यो हल्लीसकदलितमल्लीलतिकया
समन्तादुल्लासस्तव मनसि रासस्थलिकया ॥१८॥
तदन्ते वासन्तीविरचितमनङ्गोत्सवकला
चतुःशालं शौरेः स्फुरति न दृशौ तव विकिरेः ।
तदालोकोद्भेदप्रमदभरविस्मारितगति
क्रिये जाने तावत्त्वयि वत हता गोपवनिता ॥१९॥
मम स्वार्थानां चतिरिह विलम्बाद्यदपि ते
विलोकेथाः सर्वं तदपि हरिकेलिस्थलमिदं ।
तवेयं न व्यर्था भवतु शुचिता कः स हि सखे
गुणो यस्त्वाणूर्हप्रति मतिनिवेशाय न भवेत् ॥२०॥
सकृद्वंशीनादश्रवणमिलिताभीरवनिता
रहःक्रीडासाक्षी प्रतिपदलतासद्मसुभगः ।
स धेनूनां बन्धुर्मधुमथनखट्वायितशिलः
करिष्यत्यानन्दं सपदि तव गोवर्द्धनगिरिः ॥२१॥

तमेवाद्रिं चक्राङ्कितकरपरिष्वङ्गरसिकं
महीचक्रे शङ्केमहि शिखरिणां शेखरतया ।
अरातिं ज्ञातीनां ननु हरिहयं यः परिभवन्
यथार्थं स्वं नाम व्यधित भुवि गोवर्द्धन इति ॥२२॥
तमालस्यालोकाद्गिरिपरिसरे सन्ति चपलाः
पुलिन्दो गोविन्दस्मरणरभसोत्तप्तवपुषः ।
शनैस्तापं तासां क्षणमपनयन् यास्यति भवान्
अवश्यं कालिन्दीसलिलशिशिरैः पक्षपवनैः ॥२३॥
तदन्ते श्रीकान्तस्मरसमरधाटीपुटकिता
कदम्बानां वाटी रसिकपरिपाटीं स्फुटयति ।
त्वमासीनस्तस्यां न यदि परितो नन्दसि ततो
बभूव व्यर्था ते प्रणरसनिवेशव्यसनिता ॥२४॥
शरन्मेघश्रेणीप्रतिभटमरिष्टासुरशिरस्
चिरं शुष्कं वृन्दावनपरिसरे द्रक्ष्यति भवान् ।
यदारोढुं दूरान्मिलति किल कैलासशिखरि
भ्रमाक्रान्तस्वान्तो गिरिशसुहृदः किङ्करगणः ॥२५॥
रुवन् याहि स्वैरं चरमदशया चुम्बितरुचो
नितम्बिन्यो वृन्दावनभुवि सखे सन्ति बहवः ।
परावर्त्तिष्यन्ते तुलितमुरजिन्नूपुररवात्
तव ध्वानात्तासां बहिरपि गताः क्षिप्रमसवः ॥२६॥
त्वमासीनः शाखान्तरमिलितखण्डत्विषि सुखं
दधीथा भाण्डीरे क्षणमपि घनश्यामलरुचौ ।

ततो हंसा विभ्रन्निखिलनभसां स्वक्रमिषया
स वह्निर्ष्णुं विष्णुं कलितदरचक्रं तुलयिता ॥२७॥
त्वमष्टाभिर्नेत्रैर्विगलदमलप्रेमसलिलैर्
मुकुन्दः सिक्तस्तस्यां चतुर चतुरास्यस्तुतिभुवं ।
जिह्रीया विख्यातां स्फुटमिह भवद्वान्धवरथं
प्रविष्टं संस्मृत्ये विधिमटविदेव्यस्त्वयि गते ॥२८॥
उदञ्छन्नेवास्भः प्रसरलहरीपिच्छिलपथ
स्खलत्पादन्यासप्रणिहितविलम्बाकुलधियः ।
हरौ यस्मिन्मग्ने त्वरितयमुनाकूलगमन
स्पृहाक्षिप्ता गोप्यो ययुरनुपदं काममपि दशां ॥२९॥
मुकुन्दस्तोयक्रीडाप्रमदमिलदाहोपुरुषिका
विकाशेन स्पष्टैः फणिमणिकुलैर् धूमलरुचौ ।
पुरस्तस्मिन्नीपद्रुमकुसुमकिञ्जल्कसुरभौ
त्वया पुण्ये पेयं मधुरमुदकं कालियह्रदे ॥३०॥
तृणावर्त्तारातेर्विरहपवसन्तापितनोः
सदाभीरीवृन्दप्रणयवञ्जमानोन्नतिविदः ।
प्रणेतव्यो नव्यस्तवकभरसम्बाहितशुचस्
त्वया वृन्दादेव्याः परमविनयाद्वन्दनविधिः ॥३१॥
इति ज्ञात्वा केकाकृतिविकृतिमेकादशवनीं
वनीभूतं चूतैर्व्रजमनुवनं द्वादशमिदं ।
पुरी यस्मिन्नास्ते यदुकुलभुवां निर्मलयशो
भराणां धाराभिर् धवलितधरित्रीपरिसरा ॥३२॥

निकेतैराकीर्णा गिरिशगिरिडिम्भप्रतिभटैर्
अवष्टम्भस्तम्भावलिविलसितैः पुष्पितवना ।
निविष्टा कालिन्दीतटभुवि तवाधास्यति सखे
समन्तादानन्दं मधुरजनवृन्दा मधुपुरी ॥३३॥
वृषः शम्भोर्यस्यां दशति नवमेकत्र श्रवणं
विरिंचेरन्यस्मिन् गिलति कलहंसो बिसलतां ।
क्वचित् क्रौञ्चारातेः कवलयति केकी विषधरं
विलीढे शल्लक्या वलरिपुकरी पल्लवमितः ॥३४॥
अबोधिष्ठाः काषान्नहि विघटितां प्रच्छदपटीं
विमुक्तामज्ञासीः पथि पथि न मुक्तावलिमपि ।
अयि श्रीगोविन्दस्मरणमदिरामत्तहृदये
सतीति ख्यातिं ते हसति कुलटानां कुलमिदं ॥३५॥
असव्यं बिभ्राणा पदमधृत लाक्षारसमसौ
प्रयाताहं मुग्धे विरम मम वेशैः किमधुना ।
अमन्दादाशङ्के सखि पुरपुरन्ध्रीकलकलाद्
अलिन्दाग्रे वृन्दावनकुसुमधन्वा विजयते ॥३६॥
अयं लीलापाङ्गनपितपुरवीथीपरिसरो
नवाशोकोत्तंसस्खलति पुरतः कंसविजयी ।
किमस्मानेतस्मान्मनिभवनपृष्ठाद्विनुदती
त्वमेका स्वश्याक्षि स्थगयसि गवाक्षावलिमपि ॥३७॥
मुहुः शून्यां दृष्टिं वहसि रहसि ध्यायसि सदा
श्टणोषि प्रत्यक्षं न परिजनविज्ञापनशतं ।

अतः शङ्के पङ्केरुहमुखि ययौ श्यामलरुचिः
स यूनामुत्तुंसस्तव नयनवीथीपथिकतां ॥३८॥
विलज्जं मा रोदीरिह सखि पुनर्यास्यति हरिस्
तवापाङ्गक्रीडानिविडपरिचर्य्याग्रहिलतां ।
इति खैरं यस्यां पथि पथि मुरारेरभिनव
प्रवेशे नारीणां रतिरभसजल्पा ववनिरे ॥३९॥

पञ्चभिः कुलकम् ॥

सखे साक्षाद्दामोदरवदनचन्द्रा वकलन
स्फुरत्प्रेमानन्दप्रकरलहरीचुम्बितधियः ।
मुकुन्दस्ताभीरीसमुदयशिरोन्यस्तविपदस्
तवाक्ष्णो रानन्दं विदधति पुरा पौरवनिताः ॥४०॥
अथ क्रामं क्रामं क्रमघटनया शङ्कटतरान्
निवासान् वृष्णीनामनुसर पुरीमध्यविशिखान् ।
मुरारातेर्यत्र स्थगितगगनाभिर् विजयते
पताकाभिः सन्तर्पितभुवनमन्तःपुरवरं ॥४१॥
यदुत्सङ्गे तुङ्गस्फटिकरचिताः सन्ति परितो
मराला माणिक्यप्रकरघटितत्रोटिचरणाः ।
सुहृद्बुद्ध्या हंसाः कलितमधुरस्याम्बुजभुवः
समर्य्यादा येषां सपदि परिचर्य्यां विदधति ॥४२॥
चिरान्मृग्यन्तीनां पशुपरमणीनामपि कुलैर्
अलब्धं कालिन्दीपुलिनविपिने लीनमभितः
मदालोकोल्लासस्मितपरिचितास्यं प्रियसखि

स्फुरन्तं वीक्षिष्ये पुनरपि किमग्रे मुरभिदं ॥४३॥
विषादं माकार्षीर्द्रुतमवितथव्याहृतिरसौ
समागन्ता राधे धृतनवशिखण्डस्तव सखा ।
इति ब्रूते यस्यां शुकमिथुनमिन्द्रानुज कृते
यदाभीरीवृन्दैरुपहृतमभूद्दुग्धवकरे ॥४४॥
युग्मकम् ॥
घनश्यामा भाव्यत्युपरि हरिहर्म्यस्य शिखिभिः
कृतस्तोत्रा मुग्धैरगुरुजनिता धूमलतिका ।
तदालोकाद्वीर स्फुरति तव चेन्मानसरुचिर्
जितं तर्हि स्वैरं जनसहनिवासप्रियतया ॥४५॥
ततोऽमध्येकक्षं प्रतिनवगवाक्षस्तवकितं
चलन्मुक्तालम्बस्फुरितममलस्तम्भनिवहं
भवान् द्रष्टा हेमोल्लिखितदशमस्कन्धचलितैर्
लसद्भित्तिप्रान्तं मुरविजयिनः केलिनिलयं
अलिन्दे यस्यास्ते मरकतमयी यष्टिरमला
ययालुर्ध्यां रात्रौ मदकलकलापी कलयति ।
निरातङ्कस्तस्याः शिखरमधिरुह्य श्रमनुदं
प्रतीक्षेथा भ्रातर्वरमवसरं यादवपतेः ॥४७॥
निविष्टः पल्यङ्के मृदुलतरतूलीधवलिते
त्रिलोकीलक्ष्मीणां ककुदि दरसाचीकृततनुः
अमन्दं पूर्णेन्दुप्रतिमसुपधानं प्रमुदितो
निधायाग्रे तस्मिन्नुपहितकफोणिद्वयभरः ॥४८॥

उदंञ्चत्कालिन्दीसलिलसुभगम्भावुकरुचिः
कपोलान्ते प्रेङ्खन्मणिमकरमुद्रामधुरिमा ।
वसानः कौषेयं जितकनकलक्ष्मीपरिमलं
मुकुन्दस्ते साक्षात् प्रमदसुधया सेक्ष्यति दृशौ ॥४९॥

विकङ्कः पौराणीरखिलकुलदृब्धो यदुपतेर्
अदूरादासीनो मधुरभणितिर्गास्यति तदा ।
पुरस्तादाभीरीगणभयदनामा सकठिनो
मणिस्तम्भालम्बी कुरुकुलकथां सङ्कुलयिता ॥५०॥

शिलीनामुत्तंसः स किल कृतवर्मा पृथुभयतः
प्रणेष्येते वालव्यजनयुगलान्दोलनविधिं ।
स जानुभ्यामष्टापदभुवमवष्टभ्य भविता
गुरोः शिष्यो नूनं पदकमलसम्बाहनरतः ॥५१॥

विहङ्गेन्द्रो युग्मीकृतकरसरोजो भुवि पुरः
कृताग्रङ्को भावी प्रजविनि निदेशेऽर्पितमनाः ।
छदद्वन्द्वे यस्य ध्वनति मथुरावासोवटवो
व्युदस्यन्ते सामस्वरकलितमन्योन्यकलहं ॥५२॥

न निर्वक्तुं दामोदरपदकनिष्ठाङ्गुलिनख
द्युतीनां लावण्यं भवति चतुरास्योपि चतुरः ।
तथापि स्त्री प्रज्ञासुलभतरलत्वादहमसौ
प्रवृत्ता तन्मूर्त्तिस्तवरतिमहासाहसरसे ॥५३॥

विराजन्ते यस्य व्रजशिशुकुलस्तेयविकल
स्वयम्भूवचूडामेर्लुलितशिखराः पादनखराः ।

क्षणं यानालोक्य प्रकटपरमानन्दविरसः
स देवर्षिर् मुक्तानपि तनुभृतः शोचति भृशं ॥५४॥
सरोजानां व्यूहः श्रियमभिलसन् यस्य पदयोर्
ययौ रागाढ्यानां विधुरमुदवासव्रतविधिं ।
हिमं वन्दे नीचैरनुचितविधानव्यसनिनां
यदेषां प्राणान्तं दमनमनुवर्षं प्रणयति ॥५५॥
रुचीनामुल्लासैर् मरकतमयस्थूलकदली
कदम्बाहङ्कारं कवलयति यस्योरुयुगलं ।
यदालानस्तम्भद्युतिमवललम्बे वलभृतां
मदादुद्दामानां पशुपरमणीचित्तकरिणां ॥५६॥
सखे यस्याभीरीनयनसफरीजीवनविधौ
निदानं गाम्भीर्य्यप्रसरकलिता नाभिसरसी ।
यतः कल्पस्यादौ सनकजनकोत्पत्तिवडभी
गभीरान्तःकक्षाधृतभुवनमम्भोरुहमभूत् ॥५७॥
द्युतिं धत्ते यस्य त्रिवलिलतिका सङ्कटतरं
सखे दामश्रेणीव्रणपरिचयाभिन्नमुदरं ।
यशोदा यस्यान्तः सुरनरभुजङ्गैः परिवृतं
मुखद्वारावारद्वयमवलुलोके त्रिभुवनं ॥५८॥
उरो यस्य स्फारं स्फुरति वनमालावलयितं
वितन्वानं तन्वीजनमनसि सद्यो मनसिजं ।
मरीचीभिर्यस्मिन् रविनिवहतुल्योऽपि वहते
सदा खद्योताभां भुवनमधुरः कौस्तुभमणिः ॥५९॥

समन्तादुन्मीलद्बलभिदुपलस्तम्भयुगल
प्रभाजैत्रं केशिद्विजलुलितकेयूरललितं ।
स्मरक्लाव्यद्गोपीपटलहठकण्ठग्रहपरं
भुजद्वन्द्वं यस्य स्फुटसुरभिगन्धं विजयते ॥६०॥
जिहीते साम्राज्यं जगति नवलावण्यलहरी
परीपाकस्यान्तर्मुदितमदनावेशमधुरं ।
नटद्भ्रूवल्लीकं स्मितनवसुधाकेलिसदनं
स्फुरन्मुक्तापंक्तिप्रतिमरदनं यस्य वदनं ॥६१॥
किमेभिर्व्याहारैः कलय कथयामि स्फुटमहं
सखे निःसन्देहं परिचयपदं केवलमिदं ।
परानन्दो यस्मिन्नयनपदवीभाजि भविता
त्वया विज्ञातव्यो मधुरख सोऽयं मधुरिपुः ॥६२॥
विलोकेथाः कृष्णं मदकलमरालीरतिकला
विदग्धव्यामुग्धं यदि पुरवधूविभ्रमभरैः ।
तदा नास्मान् ग्राम्याः श्रवणपदवीं तस्य गमयेः
सुधापूर्णं चेतः कथमपि न तक्रं मृगयते ॥६३॥
यदा वृन्दारण्यस्मरणलहरीहेतुरमलं
पिकानां वेवेष्टि प्रतिहरितमुच्चैः कुहुरुतं ।
वहन्ते वा वाताः स्फुरितगिरिमल्लीपरिमलास्
तदैवास्माकीनां गिरमुपहरेथा मुरभिदि ॥६४॥
पुरा तिष्ठन् गोष्ठे निखिलरमणीभ्यः प्रियतया
भवान् यस्यां गोपीरमण विदधे गौरवभरं ।

सखी तस्या विज्ञापयति ललिता धीरललित
प्रणम्य श्रीपादाम्बुजकनकपीठोपरिसरे ॥६५॥

प्रयत्नाद्दावाख्यं नवकमलिनीपल्लवकुलैस्
त्वया भूयोयस्याः कृतमहह सम्वर्द्धनमभूत् ।
चिराद्दूधोभारस्फुरणगरिमाक्रान्तजघना
वभूव प्रष्ठौही मुरमथन सेयं कपिलिका ॥६६॥

समीपे नीपानां त्रिचतुरदला हन्त गमिता
त्वया माकन्दस्य प्रियसहचरी भावनियतिं ।
इयं सा वासन्ती गलदमलमाध्वीकपटली
मिषादग्रे गोपीरमण रुदती रोदयति नः ॥६७॥

प्रसूतो देवक्या मुरमथन यः कोपि पुरुषः
स जातो गोपालाभ्यदयपरमानन्दवसतिः ।
धृतो यो गान्धिन्या कठिनजठरे सम्प्रति ततः
समन्ताद्देवास्तं शिव शिव गता गोकुलकथा ॥६८॥

अरिष्टेनाहूताः पशुपसुहृदो यान्ति विपदं
तृणावर्त्ताक्रान्त्या रचयति भयं चत्वरचयः ।
अमी व्योमीभूता व्रजवसतिसमीपरिसरा
वहन्ते नस्तापं मुरहर विदूरं त्वयि गते ॥६९॥

त्वया नागन्तव्यं कथमिह हरे गोष्ठमधुना
लताश्रेणी वृन्दावनभुवि यतोऽभूद्विषमयी ।
प्रसूनानां गन्धं कथमितरथा वातनिहितं
भजन् सद्योमूर्च्छां वहति निवहो गोपसुहृदां ॥७०॥

कथं सङ्गोऽस्माभिः सह समुचितः संप्रति हरे
वयं ग्राम्या नार्य्यस्त्वमसि नृपकन्यार्च्चितपदः ।
गतः कालो यस्मिन् पशुपरमणीसङ्गमकृते
भवान् व्यग्रस्तस्थौ तमसि गृहवाटीविटपिनि ॥७१॥
वयं त्यक्ताः स्वामिन् यदिह तव किं दूषणमिदं
निसर्गः श्यामानामयमतितरां दुष्परिहरः ।
कुहूकण्ठैरण्डावधिसहनिवासात् परिचिता
विसृज्यन्ते सद्यः कलितनवपक्षैर्बलिभुजः ॥७२॥
अयं पूर्वोरङ्गः किल विरचितो यस्य तरसा
रसादाख्यातव्यं परिकलय तन्नाटकमिदं ।
मया प्रष्टव्योसि प्रथममिति वृन्दावनपते
किमाहो राधेति स्मरसि कृपणं वर्णयुगलं ॥७३॥
अयि कुञ्जद्रोणीकुहरगृहमेधिन् किमधुना
परोक्षं वक्ष्यन्ते पशुपरमणी दुर्नियतयः ।
प्रवीणा गोपीनां तव चरणपद्मेर्पितमना
ययौ राधा साधारणसमुचितप्रश्नपदवीं ॥७४॥
त्वया गोष्ठं गोष्ठीतिलक किल चेद्विस्मृतमिदं
न तूर्णं धर्म्मोर्णापतिरपि विधत्ते यदि कृपां ।
अहर्वृन्दं वृन्दावनकुसुमपालीपरिमलैर्
दुरालोकं शोकास्पदमथ कथं नेष्यति सखी ॥७५॥
तरङ्गैः कुर्वाणा श्रमनभगिनीलाघवमसौ
नदीं काञ्चिद्गोष्ठे नयनजलपूरैरजनयत् ।

इती वाक्याद्वेषादभिमतदशाप्रार्थनमयीं
मुरारे विज्ञप्तिं निशमयति मानी न शमनः ॥७६॥
कृताकृष्टिक्रीडं किमपि तव रूपं मम सखी
सकृद्दृष्टाद्दूरादहितहितबोधोज्झितमतिः।
हता शेयं प्रेमानलमनुविशन्ती सरभसं
पतङ्गीवात्मानं मुरहर मुहुर्दाहितवती ॥७७॥
मया वाच्यः किं वा त्वमिह निजदोषात् परमसौ
ययौ मन्दा वृन्दावनकुमुदबन्धो विधुरतां।
यदर्थं दुःखाग्निर्दहति न तमद्यापि हृदयान्
नयस्माद्दुर्मेधा लवमपि भवन्तं दवयति ॥७८॥
त्रिवक्राहो धन्या हृदयमिव ते स्वं वपुरियं
समासाद्य स्वैरं यदिह विलसन्ती निवसति।
ध्रुवं पुण्यभ्रंशादजनि सरलेयं मम सखी
प्रवेशस्तत्रासीत् क्षणमपि यदस्या न सुलभः ॥७९॥
किमाविष्टा भूतैः सपदि यदि वाक्रूरफणिना
क्षतापस्मारेण च्युतमतिरकस्मात् किमपतत्।
इति व्यग्रैरस्यां गुरुभिरभितो वेणुनिनद
प्रवादिभ्रष्टायां मुरहर विकल्पा विदधिरे ॥८०॥
नवीनेयं सम्मल्यकुशलपरीपाकलहरी
नरीनर्त्ति स्वैरं मम सहचरीचित्तकुहरे।
जगन्नेत्रश्रेणी मधुरमथुरायां निवसतश्
चिरादार्त्तां वार्त्तामपि तव यदेषा न लभते ॥८१॥

जनान् सिद्धादीशान्नमति भजते मान्त्रिकगणान्
विधत्ते शुश्रूषामधिकविनये नौषधिविदां।
त्वदीनादीनायै परिचरति भक्त्या गिरिसुतां
मनीषा हि व्यग्रा किमपि सुखहेतुं न मनुते॥८२॥
पशूनां पातारं भुजगरिपुपत्रप्रणयिनं
स्मरोद्दामक्रीडं निविडघनसारद्युतिहरं।
सदाभ्यर्णे नन्दीश्वरगिरिभुवो रङ्गरसिकं
भवन्तं कंसारे भजति भवदाशैव मम सखी॥८३॥
भवन्तं सन्तप्ता विदलिततमालाङ्कुररसैर्
विलिख्य भ्रूभङ्गीकृतमदनकोदण्डकदनं।
निधास्यन्ती कण्ठे तव निजभुजावल्लरिमसौ
धरण्यामुन्मीलज्जडिमनिविडाङ्गी विलुठति॥८४॥
कदाचिन्मूढेयं निविडभवदीयस्मृतिमदाद्
अमन्दादात्मानं कलयति भवन्तं मम सखी।
तथास्या राधाया विरहदहनाकल्पितधियो
मुरारे दुःसाधा क्षणमपि न राधा विरमति॥८५॥
त्वया सन्तापानामुपरि परिमुक्तापि रभसाद्
इदानीमापेदे तदपि तव चेष्टां प्रियसखी।
यदेषा कंसारे भिदुरहृदयं त्वामवयती
सतीनां मूर्द्धन्या भिदुरहृदयाऽभूदनुदिनं॥८६॥
समक्षं सर्वेषां निवससि समाधिप्रणयिनाम्
इति श्रुत्वा नूनं गुरुतरसमाधिं कलयति।

सदा कंसारातौ भजसि यमिनां नैवपदवीम्
इति व्यक्तं सञ्ज्ञी भवति यममालम्बितुमपि ॥८७॥

मुरारे कालिन्दीसलिलचलदिन्दीवररुचे
मुकुन्द श्रीवृन्दावनमदनवृन्दारकमणे।
व्रजानन्दिन्नन्दीश्वरदयितनन्दात्मजहरे
सदेति क्रन्दन्ती परिजनशुचं कन्दलयति ॥८८॥

समन्तादुत्तप्तस्तव विरहदावाग्निशिखया
कृतोद्वेगः पञ्चाशुगमृगयुवेधव्यतिकरैः।
तनु भूतं सद्यस्तनुवनमिदं हास्यति हरे
हठादद्यः श्वो वा मम सहचरी प्राणहरिणः ॥८९॥

पयोराशिस्फीतत्विषि हिमकरोत्तंसमधुरे
दधाने वृग्भङ्ग्या स्मरविजयिरूपं मम सखी।
हरे दत्तस्वान्ता भवति तदिमां किं प्रभवति
स्मरो हन्तुं किन्तु व्यथयति भवानेव कुतुकी ॥९०॥

विजानीषे भावं पशुपरमणीनां यदुपते
न जानीमः कस्मात्तदपि तव मायां रचयसि।
समन्तादध्यात्मं यदिह पवनव्याधिरलपद्
बलादस्यास्तेन व्यसनकुलमेव द्विगुणितं ॥९१॥

गुरोरन्तेवासी स भजति यदूनां सचिवतां
सखी कालिन्दीयं किल भवति कालस्य भगिनी।
भवेदन्यः को वा नरपतिपुरे मत्परिचितो
दशामस्याः शंसन् यदुतिलक यस्त्वामनुनयेत् ॥९२॥

विशीर्णाङ्गीमन्तर्व्रण विलुठनादुत्कलिकया
परीतां भूयस्या सततमपरागव्यतिकरां
परिध्वस्तामोदां विरमितसमस्तालिकुतुकां
विधो पादस्पर्शादपि सुखय राधाकुमुदिनीं ॥ ६३ ॥
विपत्तिभ्यः प्राणान् कथमपि भवत्सङ्गमसुख
स्पृहाधीना शौरे मम सहचरी रक्षितवती ।
अतिक्रान्ते संप्रत्यवधिदिवसे जीवनविधौ
हताशा निःशङ्कं वितरति दृशौ चूतमुकुले ॥ ६४ ॥
प्रतीकारारम्भश्लथमतिभिरुद्यत्परिणतेर्
विमुक्तायाः व्यक्तस्मरकदनभाजः परिजनैः ।
अमुञ्चन्ती सङ्गं कुवलयदृशः केवलमसौ
बलादद्य प्राणानवति भवदाशा सहचरी ॥ ६५ ॥
अये रासक्रीड़ारसिक मम सख्यां नवनवा
पुरा बद्धा येन प्रणयलहरी हन्त गहना ।
स चेन्मुक्तापेक्षस्त्वमसि धिगिमां तूलशकलं
यदेतस्या नासानिहितमिदमद्यापि चलति ॥ ६६ ॥
मुकुन्द भ्रान्ताची किमपि यदसङ्कल्पितशतं
विधत्ते तद्वक्तुं जगति मनुजः कः प्रभवति ।
कदाचित्कल्याणी विलपति यदुत्कण्ठतमतिस्
तदाख्यामि स्वामिन् गमय मकरोत्तंससविधं ॥ ६७ ॥
अभूत् कोऽपि प्रेमा मयि मुररिपोर्यः सखि पुरा
पराद्धर्मापेक्षामपि तदवलम्ब्यादलघयं ।

तथेदानीं हा धिक् समजनि तटस्थः स्फुटमहं
भजे लज्जां येन क्षणमिह पुनर्जीवितुमपि ॥९८॥
अमी कुञ्जाः पूर्वं मम न दधिरे काममपि मुदं
इमाश्चीयं चेतः सखि न कतिशो नन्दितवती ।
इदानीं पश्यैते युगपदुपतापं विदधते
प्रभौ मुक्तापेक्षे भजति नहि को वा विमुखतां ॥९९॥
गरीयान्मे प्रेमा त्वयि परमिति स्नेहलघुता
न जीविष्यामीति प्रणयगरिमाख्यापनविधिः ।
कथं नायासीति स्मरणपरिपाटीप्रकटनं
हरौ सन्देशाय प्रियसखि न मे वागवसरः ॥१००॥
ययौ कालः कल्याण्यत्र कलितकेलीपरिमलां
विलासाढ्यो यस्मिन्न चलकुहरे लीनवपुषीं ।
स मां धृत्वा धूतः कृतकपटरोषां सखि हठाद्
अकार्षीदाकर्षन्नुरसि शशिलेखाशतदृतां ॥१०१॥
कदा प्रेमोन्मीलन्मदनमदिराक्षी समुदयं
बलादाकर्षन्तं मधुरमुरलीकाकलिकया ।
मुकुन्दं मीमद्यचिल्लीचुलुकितकुलस्त्रीव्रतमहं
विलोकिष्ये लीलामदमिलदपाङ्गी मुरभिदं ॥१०२॥
रणद्भृङ्गश्रेणीसुहृदि सरदारम्भमधुरे
वनान्ते चान्द्रीभिः किरणलहरीभिर्धवलिते ।
कदा प्रेमोद्दण्डस्मरकलहवैतण्डिक महं
करिष्ये गोविन्दं निविडभुजबन्धप्रणयिनं ॥१०३॥

मनो मे हा कष्टं ज्वलति किमहं हन्त करवै
न पारं नावारं किमुखि कलयाम्यस्य जलधेः ।
इयं वन्दे मूर्ध्ना सपदि तमुपायं कथय मे
पराम्रक्ष्ये यस्माद्धृतिकलिकयापि क्षणिकया ॥१०४॥
प्रयातो मां हित्वा यदि विबुधचूडामणिरसौ
प्रयातु स्वच्छन्दं मम समयधर्मः किल गतिः ।
इदं सोढुं का वा प्रभवति यतः स्वप्नप्रकटाद्
इहायातो वृन्दावनभुवि बलान्मां रमयति ॥१०५॥
अनौचित्यं तस्य व्यथयति मनो हन्त मथुरां
त्वमासाद्य स्वैरं चपलहृदयं धावय हरिं ।
सखि स्वप्नारम्भे पुनरपि यथा विभ्रममदाद्
इहायातो धूर्त्तः क्षपयति न मे किञ्चिनिगुणं ॥१०६॥
अयि स्वप्नो दूरे निवसतु समक्षं शृणु हठाद्
अविश्वस्ता मा भूरिह सखि मनो विभ्रमधिया ।
वयस्यस्ते गोवर्द्धनविपिनमासाद्य कुतुकाद्
अकाण्डे यद्भूयः स्मरकलहपाण्डित्यमकरोत् ॥१०७॥
अमर्षाद्द्रावन्तीं गहनकुहरे स्वचितपथां
तुलाकोटिक्वाणैस्त्वकितपदपातद्विगुणितैः ।
दिधीर्षन्मां हर्षात्तरलनयनान्तः स कुतुकी
न वंशीमद्राक्षीत्सोऽद्भुवि करसरोजाद्विगलितां ॥१०८॥
अमत्तां गन्तव्ये कलितनवचेलाञ्चलतया
लतालीभिः पुष्पस्मितशबलिताभिर्विरुधतीं ।

परीहासारम्भो प्रियसखि समालम्बितमुखीं
प्रपेदे चुम्बाय स्फुरदधरबिम्बस्तव सखा ॥१०९॥
ततोऽहं धम्मिल्ले स्थगितमुरलीका सखि शनैर्
अलीकामर्षेण भ्रमदविरलभ्रूरदचलं ।
कचाकृष्टिक्रीडाक्रमपरिचिते चौर्य्यचरिते
हरिर्लब्धोपाधिः प्रसभमनयन्मां गिरिदरीं ॥११०॥
कदाचिद्दासन्तीकुहरभुवि धृष्टः सरभसं
हसन् पृष्ठालम्बी स्थगयति कराभ्यां मम दृशौ ।
दिधीर्षौ जातेर्ष्यं मयि सखि तदीयाङ्गुलिशिखां
न जाने कुत्रायं व्रजति कितवानां कुलगुरुः ॥१११॥
अतीतेयं वार्त्ता विरमतु पुरः पश्य सरले
वयस्यस्ते सोऽयं स्मितमधुरिमोन्मृष्टवदनः ।
भुजस्तम्भोल्लासादभिमतपरीरम्भरभसः
स्मर क्रीडासिन्धुः क्षिपति मयि बन्धूककुसुमं ॥११२॥
तदुत्तिष्ठ व्रीडावति निविडमुक्तालतिकया
बधानैनं धूर्त्तं सखि मधुपुरीं याति न यथा ।
इति प्रेमोन्मीलन्नवदनुभवारूढजडिमा
सखी नामाक्रन्दं न किल कतिशः कन्दलयति ॥११३॥
अहो कष्टं बाल्यादहमिह सखीं दुष्टहृदया
मुहुर् मानग्रन्थिं सहजसरलां ग्राहितवती ।
तदारम्भाद् गोपीगणरतिगुरो निर्भरमसौ
न लेभे लुब्धापि त्वदमलभुजस्तम्भरभसं ॥११४॥

अलिन्दे कालिन्दीकमलसुरभौ कुञ्जवसतेर्
वसन्तीं वासन्तीनवपरिमलोद्गारचिकुरां ।
तदुत्सङ्गे लीनां मदमुकुलिताक्षीं पुनरिमां
कदाहं सेविष्ये किसलयकलापव्यजनिनी ॥११५॥
धृतानन्दां वृन्दावनपरिसरे शारदनिशा
विलासोल्लासेन श्लथितकवरीस्फुल्लकुसुमां
तव स्कन्धोपान्ते विनिहितभुजावल्लरिमहं
कदा कुञ्जे लीना रहसि विहसिष्यामि सुमुखीं॥११६
विदूरादाहर्त्तुं कुसुममुपयामि त्वमधुना
पुरस्तीरे तीरे कलय तुलसीपल्लवमिदं ।
इति व्याजादेनां विदितभवदीयस्थितिरहं
कदा कुञ्जे गोपी रमण गमयिष्यामि समये ॥११७॥
इति श्रीकंसारेः पदकमलयोर् गोकुलकथां
निवेद्य प्रत्येकं मज परिजनेषु प्रणयितां ।
निजाङ्के कादम्बीसहचर वहन्मण्डनतया
स यात्युच्चैः प्रेमप्रवणमनुजग्राह भगवान् ॥११८॥
मिलद्भृङ्गीं हंसीरमण वनमालां प्रथमतो
मुदा क्षेमं पृच्छन्निदमपहरेथा मम वचः ।
चिरं कंसारातेरुरसि सहवासप्रणयिनीं
किमेनामेणाक्षीं गुणवति विसस्मार भवति ॥११९॥
इदं किं वा हन्त स्मरसि रसिके खण्डनरुषा
परीताङ्गी गोवर्द्धनगिरिनितम्बे मम सखी ।

भिया संभ्रान्ताक्षं यदिह निचकर्ष त्वयि बलाद्
गृहीत्वा विभ्रश्यन्नवशिखिशिखं गोकुलपतिं ॥१२०॥
ततः सम्भाषेथाः श्रुतिमकरमुद्रामिति मुदा
भवत्यां कर्त्तव्यः किमिति कुशलप्रश्नजडिमा
रुचिस्मेरा या त्वं रचयसि बलाच्चुम्बनकलाम्
अपाङ्गेन दृष्ट्वा सखि मुररिपोर् गण्डकुहरे ॥१२१॥
निवासस्ते देवि श्रवणलतिकायामिति धिया
प्रयत्नात्त्वामेव प्रणयहृदया यामि शरणं।
परोक्षं दृष्णीनां निभृतनिभृतं कर्णकुहरे
हरेः काकूमिश्रां कथय सखि राधाविधुरतां ॥१२२॥
परीरम्भं प्रेम्णा मम सविनयं कौस्तुभमणौ
ब्रुवाणः कुर्वीथाः पतगवर विज्ञापनमिदं।
अगाधा राधायामपि तव सखे विस्मृतिरभूत्
कथं वा कल्याणं वहति तरलेहि प्रणयिता ॥१२३॥
मुकुन्दः कणत्काञ्चीमणिवलयमञ्जीरमुरली
वराला(?)म्बी भ्राम्यद्युवतिकलगीतैः सुरमणे।
स किं साक्षाद्भावी पुनरपि हरेस्ताण्डरसैर्
अमन्दः कालिन्दीपुलिनभुवि तौर्य्यत्रिकभरः ॥१२४॥
नवीनस्त्वं कम्बो पशुपरमणीभिः परिचयं
न धत्से राधाया गुणगरिमगन्धेपि न क्षती।
तथापि त्वां याचे हृदयनिहितं दोहदमहं
वहन्ते हि क्लान्ते प्रणयमवदातप्रकृतयः ॥१२५॥

गृहीत्वा गोविन्दं जलधिहृदयानन्दन सखे
सुखेन श्रीवृन्दावनपरिसरे नन्दतु भवान् ।
कथं वा ते गोष्ठं भवतु दयितं हन्त बलवान्
यदेतस्मिन् वेणोर्जयति चिरसौभाग्यमहिमा ॥१२६॥
इति प्रेमोद्गारप्रवणमनुनीय क्रमवशात्
परीवारान् भ्रातर्निभृमयति चानूरमथने ।
पुनः कोपोद्भिन्नप्रणयचटुलं तस्य निकटे
कथामाचक्षीथा दशभिरवतारैर् विलसितां ॥१२७॥
गृहीतुं त्वां प्रेमामिषपरिवृतं चित्तवडिशं
महामीन क्षिप्रं न्यधित रसपूरे मम सखी ।
विवेकाख्यं छित्वा गुणमथ तदग्रासि भवता
हताशेयं किम्वा शिव शिव विधातुं प्रभवति ॥१२८॥
वराकीयं दृष्ट्वा सुभग वपुषो विभ्रमभरं
तवाभ्यर्णं भेजे परमकुतुकोल्लासितमतिः ।
तिरोधाय स्वाङ्गं प्रकटयसि यत्त्वं कठिनतां
तदेतत् किं न स्यात्तव कमठमूर्त्तेः समुचितं ॥१२९॥
सदा कंसाराते स्फुरति चिरमद्यापि भवतः
स्फुटं क्रीडाकारे वपुषि निविडप्रेमलहरी ।
यतः सा सैरिन्ध्री मलयरुहपङ्कप्रणयिणी
त्वया क्रोडी चक्रे परमरभसादात्मदयिता ॥१३०॥
चिरादन्तर्भूता नरहरिमयी मूर्त्तिरभितस्
तदीयो व्यापारस्तव हि न ययौ विस्मृतिपथं ।

विनीतप्रह्लादस्त्वमिह परमक्रूरचरित
प्रयुक्तो यद्भूयः परहृदयभेदं जनयसि ॥१३१॥
यदात्मानं दर्पादगणितगुरुर्वामन मुदा
पुनोवाद्ये नाव्यं त्वयि बलितया कल्पितवती।
प्रपेदे तस्येदं फलमुचितमेव प्रियसखी
विदूरे यत् क्षिप्ता व्यसनकुलपाशैर्निगडिता ॥१३२॥
इयं नाथ क्रूरा भृगुपतनमाकांक्षति ततो
यदस्यां काठिन्यं तव समुचितं तद्भृगुपतेः।
इयन्ते दुर्व्वोधाकृतिरथ भवद्विस्मृतिपथं
यतो यातः साक्षाद्गुरुरपि स नन्दीश्वरपतिः ॥१३३॥
निरानन्दा गावश्चिरमुपहता दूषणकुलैः
खरायन्ते सद्यो रघुतिलक गोवर्द्धनतटाः।
विराधत्वं घोषो व्रजति भवदीयप्रवसनाद्
इदानीं मारीचः स्फुटमिह नरीनर्त्ति परितः ॥१३४॥
प्रपन्नः कालोऽयं पुनरुदयितुं रासभजनैर्
विलासिन्नद्यापि स्फुटमनपराधा वयमपि।
वितन्वानः कान्तिं वपुषि शरदाकाशवनितां
कथं न त्वं सीरध्वज भजसि वृन्दावनमिदं ॥१३५॥
न रागं सर्वज्ञ क्वचिदपि विधत्ते नरपतिं
मुकुन्दैर्ष्टि द्रोहं कलयति बलादिष्टविषये।
चिरं ध्यानासक्ता निवसति सदासौ गतरतिस्
तथाप्यस्यां हंसो सदयहृदयस्त्वं न दयसे ॥१३६॥

परिक्लेशम्लेच्छान् समदमधुपाली मधुरया
निकृन्तन् नैकान्तप्रणयरचनाखड्गलतया ।
त्वमासन्नः कल्किन्निह च तुरगोपाहितरुचिः
स्वदेशं कुर्वीथाः प्रतिमुदितवीराधिकमिदं ॥१३७॥

इति प्रेमोद्गाटस्फुटितवचो भङ्गिरखिलं
त्वमावेद्य क्लिद्यन्मुखपरिसरो लोचनजलैः ।
ततो गोविन्दस्य प्रतिचरणमाध्वीकपदवीम्
उपासीनो हृष्यां क्षणमवदधीथाः खगपते ॥१३८॥

प्रणेतव्यो दृष्टेरनुभवपथं नन्दतनयो
विधेया गोपीनां स्मरपतिहृतानामुपकृतिः ।
इयं यामैर्गव्या चतुरमथुरापि त्रिचतुरैर्
इति द्वैधं नान्तः कलय कलहंसीकुलपते ॥१३९॥

अपूर्वा यस्यान्तर्विलसति मुदा सारसरुचिर्
विवेक्तुं शक्येते सपदि मिलिते येन पयसी ।
कथङ्कारं युक्तो भवतु भवतस्तस्य कृतिनो
विलम्बः कादम्बीरमण मथुरासङ्गमविधौ ॥१४०॥

प्रपन्नः प्रेमाणं भगवति सदा भागवतभाक्
पराचीनो जन्मावधिभवरसाद्भक्तिमधुरः ।
चिरं कोऽपि श्रीमान् जयति विदितः साकरतया
धुरीणो धीराणामधिधरणि वैयासकिरिव ॥१४१॥

रसानामाधारैरपरिचितदोषः सुहृदयैर्
मुरारातिक्रीडानिविडघटनारूपसहितः ।

प्रबन्धोऽयं बन्धोरखिलजगतां तस्य सरसां
प्रभोरन्तः सान्द्रां प्रमदलहरीं पल्लवयतु ॥१४२॥

इति श्रीरूपगोस्वामिविरचितं हंसदूताख्यं
काव्यं समाप्तम् ॥

## पदाङ्कदूतः ।

गोपी भर्त्तुर्विरहविधुरा काचिदिन्दीवराक्षी
उन्मत्तेव स्खलितकवरी निःश्वसन्ती विशाल ।
अत्रैवास्ते मुररिपुरितिभ्रान्तिदूतीसहाया
त्यक्त्वा गेहं झटिति यमुनामञ्जुकुञ्जं जगाम ॥१॥

अप्राप्यैव ब्रजपतिसुतं तत्र कालं कियन्तं
मूर्च्छां प्राणप्रियतमसखीसङ्गता सङ्गमय्य ।
तस्योपान्ते कुलिशकमलस्यन्दनाङ्कादियुक्तं
पद्माकारं मुरहरपदस्याथ चिह्नं ददर्श ॥२॥

तस्मिन्नुद्यन्नवजलधरध्वानमाकर्ण्य भूयः
कन्दर्पेण व्यथितहृदयोन्मत्ततुल्या ययाचे ।
प्रज्ञाहीनं रचनरहितं निश्चलं श्रोत्रहीनं
दौत्यं कर्त्तुं मुरहरपदो लक्ष्मणं पद्मलाक्षी ॥३॥

एवं यावन्मुरहरपदे शोभते तावदेव
तस्यपास्ते कुलिशकमलस्यन्दनाङ्काङ्कुशादि ।

गोपीदौत्यप्रकटनभिया सन्निधौ चक्रपाणेर्
याने धीर प्रमुखमुखरो नूपुरो न गृहीतः ॥४॥

युक्तं चैतत् त्वयि मधुपुरीं प्रस्थिते पुण्यशीलाः
कीलालोत्थैः सुरभिकुसुमैरर्चयन्तोपि भक्त्या ।
पश्यन्तस्त्वां नयनसुभगं साश्रुधाराक्षियुग्मं
यास्यन्त्युच्चैः पुलकिततनु प्रेमधारामुदाराम् ॥५॥

चेतः प्रस्थापितमनुतया दौत्यमर्मोपयुक्तं
तत्रैवास्ते मुरहरपदस्पर्शमासाद्य मुग्धं ।
आकाङ्क्षेयं तनुगुरुतया नैव गन्तुं समर्था
कोऽन्यो गच्छेदह मधुपुरीं गोपिकानां हिताय ॥६॥

आगन्तव्यं झटिति मथुरामण्डलाङ्कोपकान्ते
शान्तेति त्वं भव मधुरिपुः प्रस्थितः प्रोच्य चेदं ।
वाक्यं तच्च श्रवणमभवत्तेन मेने क्रमाङ्क
प्रायः सत्यं मतमिदमहो कारणं कार्य्यमेव ॥७॥

तूर्णं तस्यां गमनमुचितं तेन मे तद्वियोग
व्याधेः शान्तिस्तव च भविता तत्पुरीस्पर्शपुण्यं ।
वृन्दारण्याद्भवतु सुकृतं भूरि तेनैव किं स्यान्
नाकाङ्क्षा किं भवति विपुलश्रीमतोऽर्थान्तरेषु ॥८॥

अक्रूरस्य व्रजकुलवधूप्राणपानोद्यतस्य
प्रीतिर्भूयो भवतु भवतो दर्शनात्तेन किंवा ।
कार्य्यासिद्धिर् भवति यदहो मादृशां दुःखहेतुर्
नैवौन्नत्यं सकलभुवनप्रार्थनीयं रिपूणां ॥९॥

सन्त्येवास्मत्कलुषकरिणः कोटिशो वारणीयास्
तेऽप्यस्माभिः स्मृतिकरवरेणाङ्कुशं ते गृहीत्वा ।
स्वच्छन्देन व्रज मधुपुरीं कोऽभवेद्वा विरोधी
गोपीभर्त्तुर्विरहजलधिं गोपकन्यास्तरन्तु ॥१०॥

आस्ते नूनं यदुषु मथुरामण्डले चक्रपाणिः
कूजद्भृङ्गैरमलकमलैराकुले गोकुले वा ।
तस्माद् गच्छेरतिमधुपुरीं ताञ्च जन्मावनीवद्
वालक्रीड़ां रचयति मुहुर्यत्र तत्रानुरागः ॥११॥

आस्तां मध्ये तरणितनया भीषणा भूरिनक्रैर्
आवर्त्ताद्यैरपि नयनभयदैस्तां तरिष्यस्यवश्यं ।
संसाराब्धिं तरति सहसा यत्पदं चिन्तयित्वा
तस्यासाध्यं भवति किमहो पारयानं तटिन्याः ॥१२॥

दृष्ट्वैव त्वां विदितमधुना पूर्ववत् पद्मनाभं
प्राप्यावश्यं विरहजलधेः पारमासादयिष्ये ।
मोदिष्ये च क्षणमपि हरेरास्यचन्द्रामृतेन
प्राप्तप्राणा सुरभिकुसुमामोदिते मञ्जुकुञ्जे ॥१३॥

सम्पर्कात्ते तरणितनयातीरसोपानवृन्दं
राज्ञः पन्थास्तलमपि तरोराचितं पद्मरागैः ।
शोभां यास्यत्यचिरमतुलां स्वीयकार्य्यानुरोधाद्
उक्तैरेतैर्मुहुरपि सखे तत्र न स्थेयमेव ॥१४॥

ये वीक्षन्ते सततमधुना श्रीपतेरंघ्रिपद्मं
मञ्जीराद्यैः कनककलितैर्भूषणैर्भूषितञ्च ।

तेषां च त्वं किमु न भविता लोचनप्रीतिहेतुर्
व्यक्तैरेतैः कुलिशकमलस्यन्दनाङ्कादिचिह्नैः ॥१५॥
यस्यासङ्गादलभत तनुं मानुषीं गौतमस्त्री
ध्यानेनैव प्रथितमहिमश्रीपतिं नारदादिः ।
तस्माज्जाते त्वयि मधुरिपोरंघ्रिपद्माद्विचिह्नः
किं दीनानामुपरि करुणालिङ्गितो दृष्टिपातः ॥१६॥
एकं चिह्नं हरिपदभवं पन्नगस्योत्तमाङ्गे
तादृक् शोभामपि खगपतेर् निर्भयत्वं चकार ।
पिण्डेनान्यत्तरणिरभवद् घोरसंसारसिन्धौ
ध्यातं तादृक् त्वमपि महतां जन्मविध्वंसपङ्क्त्यै ॥१७॥
उत्फुल्लानामतिसुरभयः सौरभैरम्बुजानाम्
श्लेषोल्लेशैस्तरणिदुहितुः शीतलैः शीतलाश्च ।
श्रद्धावश्यं सततगतयः स्वैरमाधूतवल्ली
वर्त्तिष्यन्ते भवदभिमतप्रीतये लाञ्छनाग्र ॥१८॥
त्यक्तव्येयं चिरपरिचिता जन्मभूमीति बुद्ध्या
मा खिद्यस्व त्रिभुवनजनत्राणहेतोः क्रमाङ्क ।
किं न त्याज्यं भवति महतां चेत् परस्योपकारो
वाराणस्या मुनिरपि गतो दक्षिणाशामगस्त्यः ॥१९॥
कर्पूरादेः सलिलमभवत् वैतरण्यम्बुतुल्यं
वाक्यागम्यं नदति कठिनं कोकिलः षट्पदोपि ।
वृन्दारण्ये किरति गरलं दुःसहं शीतरश्मिर्
नैतद्वाच्यं सकृदपि सखे सन्निधौ केशवस्य ॥२०॥

प्रस्थानन्ते कुलिशकलनान्निश्चितं पण्डिताग्र्यैस्
चित्तेऽस्माकं तदपि रमते याहि याहीति वाणी।
अप्रामाण्यं जनयति सदा नन्दसूनोर्वियोगो
व्याप्यज्ञानाद् व्रजकुलभुवां व्यापकस्यापि सिद्धौ ॥२१॥
उक्तप्रायं तरणितनयानागयोस्तत्कथायाम्
आस्ते को वा जगति भवतां भीतिहेतुः क्रमाङ्क।
किञ्च स्वाङ्के क्षणमपि भवत्सङ्गमे याति दूरं
भीतिर्मृत्योरपि किमशनिं लोकरीत्या दधासि ॥२२॥
येनारूढं विषधरशिरो भूरिवक्तव्यमन्यत्
किम्वाकारि स्तनगिरिवरारोहणञ्च सुतञ्च।
उत्पन्नस्य प्रियतमपदा तेन भीतिस्तवास्ते
को वा ब्रूयादिति हि सदृशं कारणेनैव कार्य्यं ॥२३॥
ज्ञातं ज्ञातं कुलिशसदृशं चिह्नमेतन्न वज्रं
नोचेदेवं जनयति कथं लोचनप्रीतिधारां।
दूरस्थञ्च ग्लपयति मनो निस्वनो यस्य तस्मान्
नैवप्रीतिप्रदमिति वचो न श्रुतं क्वापि केन ॥२४॥
आस्ते चैवं नवजलधरो यं विलोक्य प्रमोदान्
नृत्यन्त्युच्चैर् विषधरभुजो निस्वनोऽप्यस्य भीमः।
मिथ्यैवायं यदवधि मया वीक्षितस्तादृशोयं
कन्दर्पो मां तदवधि दहत्येव वाणैरसह्यैः ॥२५॥
कोशस्यान्ते चरणयुगलं चालयन् सूरजायां
यायाः किञ्च क्षणमपि तरोर्मूलमासाद्य तिष्ठेः।

२६

उत्कृष्टं यज्जनयति पदं सेवकानां जनानां
पद्भ्यां हीनं तदिति जगतां प्रत्ययः कूर्मलोम ॥२६॥
आरुह्यास्मत् हृदयमथवा गच्छ तुङ्गं तुरङ्गं
सौरं तेजः सजलजलदच्छायया वारणीयं ।
वृष्टिं नैव त्वदुपरि करिष्यत्ययं चण्डरश्मिः
खेदाशङ्को सरसिजसखस्त्वद्गताम्भोरुहस्य ॥२७॥
एतेन स्यान्मधुपुरगतिः केन मे पङ्किलोऽभूत्
पन्था नन्दव्रजकुलभुवां लोचनाम्भोभिरस्रैः ।
नो वा शुष्को हरिविरहजोत्तापितोपीन्दुवक्त्रो
नित्योत्पत्तेर्नयसपयसां वाक्यमेतन्निरस्तं ॥२८॥
अद्भिस्ताभिस्तरणितनया पीनतां नैव लब्धा
गोपीभर्तुर् विरहदहनैः प्रत्युत क्षीणताञ्च ।
नोचेद्देवं सलिलतरसा गोकुले मास्तु किन्तु
प्रस्थानन्ते किल मधुपुरे निर्विरोधं क्रमाच्च ॥२९॥
क्षीणैवास्ते तरणितनया वस्तुतस्त्वद्वियोगे
का वा पीना भवति वचनं कस्यचिन्नेति युक्तं ।
गोपस्त्रीणां नयनसलिलैर् वर्द्धते सा विशीर्णा
अन्ये नन्दव्रजपुरजना नूनमत्यर्थकं यत् ॥३०॥
सामग्री चेन्न फलविरहो व्याप्तिरेवेति तत्त्वं
तत्त्वं गोपीनयनसलिले केवलेप्यस्ति नैवं ।
उत्कण्ठायां हृदि न कुरुते कारणानां सहस्रं
लक्षं वापि क्षणमपि यतः पीवरत्वं जनानां ॥३१॥

तस्मात्तस्या विरतिरथवा हेतुरन्यादृशोऽस्या
न स्यादेव क्वचिदपि फलं कारणासन्निधाने।
नष्टे हेतौ प्रभवति कुतः कार्य्यमित्यप्ययुक्तं
यागेऽपूर्व्वादिव जनकताद्वारतस्तस्य सिद्धा॥३२॥
क्लेशोऽस्माकं मलयपवनैर् मूर्च्छया चोपकार-
स्तस्मात् सर्वं किल विधिकृतं कारणं कारणं न।
अम्भोजानाममृतकिरणज्योतिषा ग्लानिरुच्चैर्
उग्रज्योतिः किरणमिलनाज्जायते च प्रकाशः॥३३॥
स्त्रीभिः प्रेम प्रियतमकृतं नैव शक्यं विहातुं
यातेऽतस्त्वां किल मधुपुरीं च क्रमाय क्रमाङ्क।
दग्धेनापि व्यथितहृदया पञ्चबाणेन बाणैः
क्रूरैरुच्चैर् मदनरमणी तत्कृते रोदितिस्म॥३४॥
व्यास्ते चित्ते किल कलयितुं वासना सम्बरारेर्
एकैकेन ब्रजकुलवधूप्राणमेकैकमङ्क।
बाणेनातः सततमतनुर्जातकोपाहितुल्यैः
क्रूरैरस्मान्दहति कुसुमैः शायकैः पञ्चसंख्यैः॥३५॥
यल्लोकानामपकृतिभयात् कालकूटोपि पीतस्
तानेवायं दहति गरलैस्तादृशैराचितेन।
बाणेनेति त्रिपुररिपुणा जातकोपेन दग्धो
नेत्रोत्थेन प्रबलशिखिना निर्दयं सम्बरारिः॥३६॥
नैवं नूनं स गरजगरः शम्बरारेः शरस्य
मर्म्मादीनामयमपि यतो धैर्य्यविध्वंसहेतुः।

एतद्वाक्यं गिरिशचरणैः खण्डितं मण्डितान्नैर्
अन्यासङ्गाद्व्यथितहृदयैर्निर्दयं दग्धुकामैः ॥३७॥

उत्तापोयं मदनजनितो वर्द्धते नित्यमुच्चैर्
वृन्दारण्ये वसतिरधुना केवलं दुःखहेतुः ।
किञ्चास्माकं नयनसलिलैर्वर्द्धते चेन्नदीयं
केन स्थेयं द्रुतगतिजलैराचिते कुञ्जमध्ये ॥३८॥

यस्य ध्यानं जनयति सुखं यादृशं तादृशं न
स्वर्लोकादावपि किमपरं ब्रह्मसाक्षात्कृतौ च ।
श्रेयश्चैतन्मुनिवरमुखाम्भोजतः कीदृशो ते
बुद्धिस्तादृग् जनकविषये दर्शने नास्तियत्नः ॥३९॥

वक्तव्यं यन्मदनजनितं दुःखमस्माकमेतद्
भूयो भूयः प्रियतमपदे गोपयित्वा स्वदेहं
दृष्टे तेन त्वयि नयनयोर्निस्तुलप्रीतिहेतौ
यास्यत्येव क्षणमपि मनस्तत्कथायां न तस्य ॥४०॥

वक्तव्यञ्च स्फुटमिति यदा निर्जनस्थो मुकुन्दः
पश्चाद्यङ्कैरतिसुललितैरङ्कितं तत्पदाब्जैः ।
वृन्दारण्यं स्मरसि न कथं श्रीपते मञ्जुकुञ्जं
ज्ञातं ज्ञातं यदिह न परीरम्भणं कुब्जिकायाः ॥४१॥

आकाङ्क्षाया ग्लपयति मनो मादृशां वासना सा
याव्दे धर्मे सति न भविता हानिरेव क्रमाद्य ।
साकाङ्क्षोत्थया मुरहरपदे सर्वमेतन्निवेद्यं
नोचेत्तस्य प्रमितिजनने केन हेतुस्तवोक्तिः ॥४२॥

आगन्तव्यं सरसिजदृशा बोधितेन त्वदुक्त्या
नाप्रत्यक्षं प्रमितिकरणं वाक्यमेतन्न युक्तं ।
स्वीकर्त्तव्यं नयनविरहापत्तिभीत्येति सर्वैर्
मानाभावात् दृशिनहि भवेन्मानमन्यद् द्वितीयात् ॥ ४३ ॥
बौद्धस्यैतन्मतविटपिनो मूलमाच्छादितं स्यात्
स्वद्भिस्तस्यानृतवचनतो यन्मया पूर्वमुक्तं ।
यद्यस्माकं सततमतनोः शायकक्षुण्णदेहः
प्रामाण्ये स्यात् कुसुमविशिखोऽस्तीति वाक्येन साक्षी ॥
मूर्खा एव क्षणिकमनिशं विश्वमाहुर्न धीराः
खेदोऽस्माकं हरिविरहजः सर्व्वदैवास्ति चित्ते ।
नान्तरः शब्दो वचनमपि यत्तादृशं तस्य किन्तु
प्रेमैवास्मत्प्रियतमकृतं तच्च गोपाङ्गनासु ॥ ४५ ॥
शाके शायकवेदषोडशमिते श्रीकृष्णशर्मार्पयन्
स्वानन्दप्रदनन्दनन्दनपदद्वन्द्वारविन्दं हृदि ।
चक्रे कृष्णपदाङ्कदूतरचनं विद्वन्मनोरञ्जनं
श्रीलश्रीयुतरामजीवनमहाराजाधिराजादृतः ॥ ४६ ॥

इति महामहोपाध्याय श्रीकृष्णसार्वभौमविरचितं
पदाङ्कदूतकाव्यं समाप्तम् ॥

## शान्तिशतकम् ।

नमस्यामो देवान् ननु हतविधेस्तेपि वशगा
विधिर्वन्द्यः सोपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं किममरगणैः किञ्च विधिना
नमस्तत् कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥१॥
यदि शान्तौ मनो देयं यदा मुक्तिपदे रतिः ।
तदा शिह्लनमिश्रस्य पदमारभ्यतां धिया ॥२॥
सन्तोषसन्ततिकरं विदुषां कवीनां
सांसारिकाप्रतिमदुःखविनाशबीजं ।
यत्नेन शान्तिशतकं विदधे विवेकी
श्रीशिह्लनः प्रकृतिसुन्दरशुद्धबुद्धिः ॥३॥
आत्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निस्पृहाः ।
न प्राप्तानि पुरा न सम्प्रति न च प्राप्तौ दृढ़प्रत्यया
वांछामात्रपरिग्रहाण्यपि वयं त्यक्तुं न तानि क्षमाः॥४
धन्यानां गिरिकन्दरोदरभुवि ज्योतिःपरं ध्यायताम्
आनन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्के स्थिताः।

अस्माकन्तु मनोरथोपरचितप्रासादवापीतट
क्रीडाकाननकेलिमण्डपयुषामायुः परं क्षीयते॥ ५॥
विशीर्णः प्रारम्भो वपुरपि जराव्याधिविधुरं
गतं दूरे विप्रस्वजनभरणं वाञ्छितमपि ।
इदानीं व्यामोहादहह विपरीते हतविधौ
विधेयं यत्तत्त्वं स्फुरति मम नाद्यापि हृदये ॥ ६॥
वीभत्साः प्रतिभान्तिकिन्न विषयाःकिन्तु स्पृहा पुष्यतो
देहस्यापचयो मतौ निविशते गाढो गृहेषु ग्रहः ।
वक्ष्योपाय्यमिति स्फुरत्यपि हृदि व्यावर्त्तिका वासना
का नामेयमतर्क्यहेतुगहना दैवी सतां यातना ॥ ७॥
अजानन्दाहार्त्तिं विशति शलभो दीपदहनं
न मीनोपि ज्ञात्वा हृतवडिशमश्नाति पिशितं ।
विजानन्तोप्येतान् वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ ८॥
क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न सन्तोषतः
सोढा दुःसहशीतवाततपनक्लेशा न तप्तन्तपः ।
ध्यातं वित्तमहर्निशं नच पुनर्विष्णोः पदं शाश्वतं
तत्तत्कर्मकृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितं॥ ९॥
कृत्वा शस्त्रविभीषिकां कतिपयग्रामेषु दीनाः प्रजा
मथ्नन्तोविटजल्पितैरुपहृता क्षौणीभुजस्ते किल ।
विद्वांसोपि वयं किल त्रिजगतीसर्गस्थितिव्यापादाम्
ईशस्तत्परिचर्य्यया न गणितो येरेष नारायणः ॥१०॥

नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति ।
यं कञ्चित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढा वराका वयं ॥११॥

जन्मेदं वन्ध्यतां नीतं भवभोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥१२॥

याच्ञाशून्यमयत्नलभ्यमशनं वायुः कृतो वेधसा
व्यालानां पशवस्तृणाङ्कुरभुजः स्वस्थाः स्थलीशायिनः ।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥१३॥

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटुं मृषा
नैषां गर्वगिरः शृणोषि न पुनः प्रत्याशया धावसि ।
काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तन्तपः ॥१४॥

कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।
विदधति धनिषु न दैन्यं ते खलु पशवो वयं सुधियः ॥१५॥

आस्वाद्य स्वयमेव वच्मि महतीर्मर्मच्छिदो वेदना
मा भूत् कस्यचिदप्ययं परिभवो याच्ञेति संसारिणः ।
पश्य भ्रातरियं हि यौवनजराधिक्कारकेलिस्थली
मानम्लानमसो गुणव्यतिकरप्रागल्भ्यगर्वच्युतिः ॥१६॥

क्व गन्तासि भ्रातः कृतवसतयो यत्र धनिनः
किमर्थं प्राणानां स्थितिमनुविधातुं कथमपि ।

धनैर्याच्ञालब्धैर्न न परिभवोऽभ्यर्थनफलं
निकारोऽग्रे पश्चाद्धनलवहृह भोक्तुं हि निधनं ॥१७॥
प्राणानां बत किं ब्रुवे कठिनतां तैरेव सा विस्मृता
निष्क्रामन्ति कथञ्चिदेव हि न ये याच्ञावचोभिः समं।
आत्मानं पुनराक्षिपामि विदितस्थैर्य्येऽपि येषामहो
मिथ्याशङ्किततद्वियोगविधुरोयत् प्रार्थये सर्वशः॥१८॥
अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किं नास्माभिर् विगलितविवेकैर् व्यवसितं।
यदीशानामग्रे द्रविणकणमोहान्धमनसां
कृतं वीतव्रीडैर् निजगुणकथापातकमपि ॥१९॥
बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं
सर्वैर्बन्धुभिरध्वनीव पथिकैर् योगो वियोगावहः।
हातव्योयमसार एष विरसः संसार इत्यादिकं सर्वस्य
एव हि वाचि तेतसि पुनः कस्यापि पुण्यात्मनः ॥२०॥
तडिन्मालालोलं प्रतिविरतिदत्तान्धतमसं
भवे सौख्यं हित्वा शमसुखमुपादेयमनघं।
इति व्यक्तोद्गारं चटुलवचसः शून्यमनसो
वयं वीतव्रीडाः शुकइव पठामः परममी ॥२१॥
यदासौ दुर्वारः प्रसरति मदश्चित्तकरिणस्
तदा तस्योद्दामप्रसररसरूढैर् व्यवसितैः।
क्व तत् धैर्य्यालानं क्व च निजकुलाचारनिगडः
क्व सा लज्जारज्जुः क्व विनयकठोराङ्कुशमपि ॥२२॥

भिक्षाशनं भवनमायतनैकदेशः
शय्या भुवः परिजनो निजदेहभावः ।
वासश्च जीर्णपटखण्डनिबद्धकन्था
हाहा तथापि विषयान् न जहाति चेतः ॥२३॥

त्वामुदर साधु मन्ये शाकैरपि
यदसि लब्धपरितोषं ।
हतहृदयं ह्यधिकाधिकवाञ्छा
शतदुर्भरं न पुनः ॥२४॥

शुचां पात्रं धात्री परिणतिरमेध्यप्रचयभू
रयं भूतावासो विमृश कियतीं याति न दशां ।
तदस्मिन् धीराणां क्षणमपि किमास्थातुमुचितं
खलीकारः कोयं यदहमहमेवेति रभसः ॥२५॥

रेतः शोनितयोरियं परिणतिर्यद्वर्ष्म तच्चाभवन्
स्त्र्योरास्पदमाशयो गुरुशुचां रोगस्य विश्रामभूः ।
जानन्नप्यवशो विवेकविरहान्मज्जन् न विद्याम्बुधौ
शृङ्गारीयति पुत्रकाम्यति तव चेतीयति स्त्रीयति ॥२६॥

क्वैतद्वक्त्रारविन्दं क्व तदधरमधु क्वायतास्ते कटाक्षाः
क्वालापाः कोमलास्ते क्व च मदनधनुर्भङ्गुरो भ्रूविलासः ।
इत्थं खट्वाङ्गकोटौ प्रकटितदशनं मञ्जुगुञ्जत्समीरं
रागान्धानामिवोच्चैरुपहसति महामोहजालं कपालं ॥

शृणु हृदय रहस्यं यत् प्रशस्तं मुनीनां
न खलु न खलु योषित्सन्निधिः सन्निधेयः ।

हरति हि हरिणाक्षी क्षिप्रमक्षिक्षुरप्र
प्रहतशमतनुत्रं चित्तमप्युत्तमानां ॥२८॥
समाश्लिष्यत्युच्चैर् घनपिशितपिण्डं स्तनधिया
मुखं लालाक्लिन्नं पिबति चषकं सासवमिव ।
अमेध्यक्लेदार्द्रे पथि च रमतेस्पर्शरसिको
महामोहान्धानां किमपि रमणीयं न भवति ॥२९॥

इति शान्तिशतके परीतापोपशमोनाम
प्रथमः परिच्छेदः ॥१॥

अयमविचारितचारुतया
संसारोभाति रमणीयः ।
अत्र पुनः परमार्थदृशा
न किमपि सारमणीयः ॥१॥

केनाप्यनर्थरुचिना कपटं प्रयुक्तम्
एतत् सुहृत्तनयबन्धुमयं विचित्रं
कस्यात्र कः परिजनः स्वजनो जनोवा
स्वप्नेन्द्रजालसदृशः खलु जीवलोकः ॥२॥
आरम्भः संशयानामविनयभवनं पत्तनं साहसानां
दोषाणां सन्निधानं कपटशतमयं चेत्रसप्रत्ययानां
दुस्त्याज्यं यन्महद्भिः सुरनरवृषभैः सर्वमायाकरण्डं
स्त्रीरूपं केन लोके विषमस्तमयं धर्मनाशाय सृष्टं॥३॥

यदा प्रकृत्यैव जनस्य रागिणो
भृशं प्रदीप्तो हृदि मन्मथानलः ।
तदात्र भूयः किमनर्थपण्डितैः
कुकाव्यहव्याहुतयो निवेशिताः ॥४॥

दधाति तावदमी विषयाः सुखं
स्फुरति यावदियं हृदिमूढता ।
मनसि तत्त्वविदान्तु विवेचके
क्व विषयाः क्व सुखं क्व परिग्रहः ॥५॥

यदा पूर्वं नासीदुपरि च तथा नैव भविता
तदा मध्यावस्था क्षणपरिचयो भूतनिचयः ।
अतः संयोगेऽस्मिन् परिणतिवियोगे च सहजे
किमाधारप्रेमाः किमधिकरणाः सन्तु च शुचः ॥६॥

इन्द्रस्याशुचिशूकरस्य च सुखे दुःखे च नास्त्यन्तरं
स्वेच्छाकल्पनया तयोः खलु सुधा विष्ठा च काम्याशनं
रम्भा चाशुचिशूकरी च परमप्रेमास्पदं मृत्युतः
संत्रासोपि समः स्वकर्मगतिभिश्चान्योन्यभावः समः॥७

कृमिकुलचितं लालाकीर्णं विगन्धि जुगुप्सितं
निरुपमरसप्रीत्या खादन्नरास्थि निरामिषं ।
सुरपतिमिव पार्श्वस्थं श्वा सशङ्कितमीक्षते
गणयति नहि क्षुद्रो लोकः परिग्रहफल्गुतां ॥८॥

अमीषां जन्तूनां कतिपयनिमेषस्थितिजुषां
वियोगे धीराणां कइह परितापस्य विषयः ।

क्षणादुत्पद्यन्ते विलयमपि यान्ति क्षणममी
न केऽपि स्थातारः सुरगिरिपयोधिप्रभृतयः ॥९॥
पुत्त्रः स्यादिति दुःखितः सति सुते तस्या मयेद्दुःखितस्
तद्दुःखादिकमार्जने तदनये तन्मूर्खतादुःखितः ।
जातश्चेत् सगुणोऽथ तन्मृतिभयं तस्मिन्मृते दुःखितः
पुत्त्रव्याजमुपागतो रिपुरयं मा कस्यचिज्जायतां ॥१०॥
स्थिरापायः कायः प्रणयिषु सुखं स्थैर्य्यविमुखं
महाभोगा रोगाः कुवलयदृशः सर्पसदृशः ।
महावेशः क्लेशः प्रकृतिचपला श्रीरपि तथा
यशः स्वैरी वैरी तदपि न हितं कर्म विहितं ॥११॥
अर्थं प्राणविनाशसंशयकरीं प्राप्यापदं दुस्तरां
प्रत्यासन्नभयं न वेत्ति विभवं स्वजीवितं कांक्षति ।
उत्तीर्णस्तु ततो धनार्थमपरां भूयो विशत्यापदं
प्राणानांच धनस्य चाधमधियामन्योन्यभावः पणः ॥१२॥
विमलमतिभिः कैरप्येतज्जगज्जनितं
पुराविधृतमपरैर् दत्तं चान्यैर् विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये वीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥१३॥
रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गीतादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकप्रीतये ।
किन्तु भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुर
छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥१४॥

आस्तामकण्टकमिदं वसुधाधिपत्यं
त्रैलोक्यराज्यमपि तच्च तृणाय मन्ये ।
निःशङ्कसुप्तहरिणीकुलसङ्कुलासु
चेतः परं वलितशैलवनस्थलीषु ॥१५॥
हरणचरणक्षुण्णोपान्ताः सशाद्वलनिर्झराः
कुसुमशबलैर् विष्वग्वातैस्तरङ्गितपादपाः ।
विविधविहगश्रेणीचित्रध्वनिप्रतिनादिता
मनसि न मुदं केषां दध्युः शिवा वनभूमयः ॥१६॥
ते तीक्ष्णदुर्जननिकारशरैरभिन्ना
धीरास्तएव शमसौख्यभुज स्तएव ।
सीमन्तिनीभुजलतागहनं व्युदस्य
येऽवस्थिताः शमफलेषु तपोवनेषु ॥१७॥
कुरङ्गाः कल्याणं प्रतिविटपमारोग्यमटविं
श्रयन्ति क्षेमं ते पुलिनकुशलं भद्रमुपलाः ।
निशान्तादस्वन्तात् कथमपि विनिष्क्रान्तमधुना
मनोऽस्माकं दीर्घामभिलषति युष्मत्परिचितिं ॥१८॥
वासो वल्कलमास्तरः किशलयान्योकस्तरूणां तलं
मूलानि क्षतये क्षुधां गिरिनदीतोयं तृषाशान्तये ।
क्रीडामुग्धमृगैर्वयांसि सुहृदो नक्तं प्रदीपः शशी
स्वाधीने विभवे तथापि कृपणा याचन्त इत्यद्भुतं ॥१९॥
शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारिपानमशनं कान्दः सहाया मृगाः ।

इत्यप्रार्थितसर्वलब्धविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत्परार्थघटनायत्नैर्विना क्षीयते ॥२०॥
पूरयित्वार्थिनामाशां प्रियं कृत्वा द्विषामपि ।
पारं गत्वा श्रुतौघस्य धन्या वनमुपासते ॥२१॥
आहारः फलमूलमात्ररचितं शय्या मही वल्कलं
सम्बीताय परिच्छदः कुशसमित् पुष्पाणि पुत्त्रा मृगाः ।
वस्त्रान्नाश्रयदानभोगविभवा निर्यन्त्रणाः शाखिनो
मित्राणीत्यधिकं गृहेषु गृहिणां किं नाम दुःखादृते ॥२२॥
विवेकः किं सोपि स्वरसजनिता यत्र न कृपा
स किं योगो यस्मिन् न भवति परानुग्रहरसः ।
स किं धर्मो यत्र स्फुरति न परद्रोहविरतिः
श्रुतं किं तद्वाग्स्यादुपशमफलं यन् न भवति ॥२३॥
अग्रे कस्यचिदस्ति कश्चिदभितः केनापि पृष्ठे कृतः
संसारः शिशुभावयौवनजराभारावतारादयं
बालस्तं बहुमन्यतामसुलभं प्राप्तं युवा सेवतां
वृद्धस्तं विषयावहिष्कृत इव व्यावृत्य किं पश्यति ॥२४॥
पुत्त्रदारादिसंसार पुंसां सम्मूढचेतसां
विदुषां शास्त्रसंसारः सद्योगाभ्यासविघ्नकृत् ॥२५॥
सार्वभौमभवनं वनवासो
निःस्वभावभवभावनया ते ।
वालिशोऽहि विषयेन्द्रियचौरैर्
मुच्यते स्वभवने च वने च ॥२६॥

स्थूलप्रावरणोतिपूर्वकथकः काशाश्रुलाला विलो
भग्नोरःकटिपृष्ठजानुदशनो मुग्धोऽतिथीन् वारयन् ।
शृण्वन् धृष्टवधूवचांसि धनुषा सन्त्रासयन् वायसान्
आशापाशनिबद्धजीवविभवो वृद्धो गृहे ग्लायति ॥२७॥

वनेषु दोषाः प्रभवन्ति रागिणां
गृहेषु पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्त्तते
निवृत्तरागस्य गृहं तपोवनम् ॥२८॥

इति शान्तिशतके विवेकोदयनाम
द्वितीयः परिच्छेदः ॥२॥

महता पुण्यपण्येनक्रीतेयं कायनौस्त्वया ।
पारं दुःखोदधेर्गन्तुं त्वरया यन्न भिद्यते ॥१॥

दिवसरजनीकूलच्छेदैः पतद्भिरनारतं
वहति निकटे कालः स्रोतः समस्तभयावहं
इह हि पततां नास्त्यालम्बो न चापि निवर्त्तनं
तदिह महतां कोयं मोहो यदेष मदाविलः ॥२॥

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत् स्वयमिमान् ।
व्रजन्तः स्वातन्त्र्यात् परमपरितापाय मनसः
स्वयं मुक्ता ह्येते शमसुखमनन्तं विदधति ॥३॥

भवारण्यं भीमं तनुगृहमिदं छिद्रबहुलं
बली कालश्चौरो नियतमसिता मोहरजनी।
गृहीत्वा ज्ञानासिं विरतिफलकं शीलकवचं
समाधानं कृत्वा स्थिरतरदृशो जागृत जनाः ॥४॥
गृहे पर्य्यन्तस्थे द्रविणकणमोषं श्रुतवता
स्ववेश्मान्यारक्षा क्रियत इति मार्गोऽयमुचितः।
नरान् गेहात् गेहात् प्रतिदिवसमाकृष्य नयतः
कृतान्तात् किं शङ्का नहि भवति रे जागृत जनाः॥५॥
के यूयं नो वयमिति च वः के भवामो भवाब्धौ
कर्मोर्मीणां विषमवलनैः फेणवत् पुञ्जिता स्मः।
तच्छेपीयः क्वचिदपि विषये चित्तमाधाय पुत्राः
सर्वारम्भैर् लगत जगतामन्तरात्मन्यनन्ते ॥६॥
सूक्तिं कर्णसुधां व्यनक्तु सुजनस्तस्मिन्न मोदामहे
ब्रूतां वाचमरुन्तुदां विषमुचं तस्मिन्न खिद्यामहे।
या यस्य प्रकृतिः सतां वितनुतां किं नस्तया जायते
कर्मस्तत् खलु कर्मजन्मनिगडच्छेदाय यज्जायते ॥७॥
मन्निन्दया यदि जनः परितोषमेति
नन्वप्रयत्नसुलभोऽयमनुग्रहो मे।
श्रेयोऽर्थिनो हि पुरुषाः परतुष्टिहेतोर्
दुःखार्जितान्यपि धनानि परित्यजन्ति ॥८॥
स्वधर्मपीडामपहाय योऽयं
मत्पापशुद्ध्यर्थमिह प्रवृत्तः।

न चेत् क्षमामप्यहमस्य कुर्यां
मत्तः कृतघ्नो वद कीदृशोऽन्यः ॥९॥
कश्चित् पुमान् क्षिपति मां प्रतिकूलवाक्यैः
सोऽहं क्षमाभवनमेत्य मुदं प्रयामि।
शोकं व्रजामि पुनरेवमयं तपस्वी
चारित्रतः स्खलितवानिति मन्निमित्तं ॥१०॥
आत्मात्मन्यवधीयतां गृहवसाद्वैराग्यमाधीयतां
बन्धुभ्यो ऽवधीयतां सुरसरित्तीरे सदा स्थीयतां।
भिक्षार्थं व्यवसीयतां प्रतिदिनं सत्कर्म सञ्चीयतां
कोपश्चेतसि हीयतां परतरं ब्रह्मानुसन्धीयतां ॥११॥
यः क्षान्तिः समये श्रुतिः शिव शिवेत्युक्तौ मनोनिर्वृतिर्
मैत्रे चाभिरुचिर् धनेषु विरतिः शश्वत्समाधौ रतिः।
एकान्ते वसतिर् गुरौ प्रतिनतिः सद्भिः समं सङ्गतिः
सत्वे प्रीतिरनङ्गनिर्जितिरसौ सन्मुक्तिमार्गे स्थितिः॥१२॥
सम्भोगाद्विषयाभिषस्य परितस्तैमित्यमस्ताखिल
ज्ञानोन्मेषतया कथं तव भवेदात्मास्पदं देहिनः।
साध्यं तद्धि तदेव साधनमितो व्यावृत्तिरेवाभिषात्
तस्यां ज्योतिरपैत्यनिन्धनमिदं दोषत्रयं धक्ष्यति ॥१३॥
बुद्धेरगोचरतया न गिरां प्रचारो
दूरे गुरुप्रथितवस्तुकथावतारः।
तत्त्वं क्रमेण विदुषां करुणावदाते
श्रद्धावतां हृदि पदं स्वयमादधाति ॥१४॥

दुःखाङ्गारकतीव्रः
संसारोऽयं महानसो गहनः।
इह विषयामिषलालस
मानस मार्जार मा निपत ॥१५॥

अरे चेतोमीन भ्रमणमधुना यौवनजले
त्यज त्वं स्वच्छन्दं युवतिजलधौ पश्यसि न किं।
तनूजालीजालं स्तनयुगलतुम्बीफलयुतं
मनोभूः कैवर्त्तः क्षिपति परितस्त्वां प्रति मुहुः ॥१६॥

विषय विषधराणां दोषदंष्ट्रोत्कराणां
विषयविषविमर्दव्यक्तदुश्चेष्टितानां।
विरम विरम चेतः सन्निधानादमीषां
सुखकणमपि नाहो साहसं मास्म कार्षीः ॥१७॥

एकीभूय स्फुटमिव किमप्याचरद्भिः प्रलीनैर्
एभिर्भूतैः स्मर कति हताः स्वान्त ते विप्रलब्धाः।
तस्मादेषां त्यज परिचयं चिन्तयस्व व्यवस्थाम्
आभाषस्ते किमु न विदितः खण्डितः पण्डितः स्यात् ॥१८॥

धूर्त्तैरिन्द्रियनामभिः प्रणयितामापादयद्भिः स्वयं
सम्भोक्तुं विषयानयं किल पुमान् सौख्याय यावञ्चित
तैः शेषे हतकृत्यतामुपगतैरौदास्यमालम्बितं
समस्त्येष विधेर्नियोगवशगः कर्मान्तरैर्वध्यते ॥१९॥

दैवे समर्प्य चिरसञ्चितमोहजालं
सुस्थाः सुखं वसत किं परयाचनाभिः।

मेरुं प्रदक्षिणयतोऽपि दिवाकरस्य
ते तस्य सप्त तुरगा न कदाचिदष्टौ ॥२०॥

आकाशमुत्पततु गच्छतु वा दिगन्तम्
अम्भोनिधिं विशतु तिष्ठतु वा यथेष्टं।
जन्मान्तरार्ज्जितशुभाशुभकृन्नराणां
छायेव न त्यजति कर्मफलानुबन्धः ॥२१॥

उपशमफलाद्विद्याबीजात् फलान्तरमिच्छतां
भवति विफलो यत्प्रारम्भस्तदत्र किमद्भुतं।
नियतविषया ह्येते भावा न यान्ति विपर्य्ययं
जनयति यतः शालेर्बीजं नजातुयवाङ्कुरं ॥२२॥

यदेते साधूनामुपरि विमुखाः सन्ति धनिनो
नचैषावज्ञैषामपितुनिजवित्तव्ययभयं।
अतः खेदो नास्मिन् परममनुकम्प्यैव भवति
स्वमांसलुब्धेभ्यः कइह हरिणेभ्यः परिभवः ॥२३॥

तस्मादनन्तमजरं परमं विकाशि
तद्ब्रह्मवाञ्छत बुधा यदि चेतनास्ति।
यस्यानुषङ्गतइमे भुवनाधिपत्यभोगादयः
कृपणएव सतां विभान्ति ॥२४॥

इति शान्तिशतके कर्त्तव्यतोपदेशो नाम
तृतीयः परिच्छेदः ॥३॥

लक्ष्मीर्निर्वृतिमेति हीनचरितैर्यैरेव तच्छिच्चया
किं नाद्यैव करोमि तामनुचरीं रामां सकामामिव।
ब्रह्माण्डे निपतत्यपि स्खलति न प्रायेण येषां मनस
तेषा मार्य्यमनस्विनामनुपदं गन्तास्मि नाहं यदि॥१॥

लब्धाः श्रियः सकलकामदुघास्ततः किं
सन्तर्पिताः प्रणयिनो विभवैस्ततः किं।
न्यस्तं पदं शिरसि विद्विषतां ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किं॥२॥

निष्कन्दाः किमु कन्दरोदरभुवः क्षीणास्तरूणां त्वचः
किं शुष्काः सरितः स्फुरद्गिरिगुरुग्रावस्खलद्वीचयः।
प्रत्युत्थानमितस्ततः प्रतिदिनं कुर्वद्भिरुद्ग्रीविभिर्
यद्द्वारार्पितदृष्टिभिः क्षितिभुजां विद्वद्भिरप्यास्यते॥३॥

ग्रासं जीर्णपलाशसंहतिकृतां कन्थां वसानो वने
कुर्य्यामम्बुभिरप्ययाचितसुखैः प्राणानुबन्धस्थितिं।
माङ्गग्लानि सवेपितं सचकितं स्वान्तर्निदाघज्वरं
वक्तुं नत्वहमुत्सहे सकृपणं देहीति दीनं वचः॥४॥

सत्यं वक्त्रमशेषमस्ति सुलभा वाणी मनोहारिणी
दातुं दानवरं शरण्यमभयं स्वच्छं पिदध्यो जलं।
पूजार्थं परमेश्वरस्य विमलः स्वाध्याययज्ञः परं
क्षुद्बाधेः फलमूलमस्ति शमनं क्लेशात्मकैः किं धनैः॥५॥

सन्ति स्वादुफला वनेषु तरवः स्वच्छं पयो निर्झरं
वासोवल्कलमाश्रयो गिरिगुहा शय्यालतावल्लरी।

आलोकाय निशासु चन्द्रकिरणाः सख्यं कुरङ्गैः स
स्वाधीने विभवेष्वहो नरपतिं सेवन्त इत्यद्भुतं ॥६॥
पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं
वस्त्रं विस्तीर्णमाशादशकममलिनं तल्पमस्वल्पमुर्वी
येषां निःसङ्गताङ्गीकरणपरिचितः स्वान्त सन्तोषवा
धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म्मनिर्म्मूलयन्ति॥
महाशय्या भूमिर्म्मृदुमुपधानं भुजलता
वितानञ्चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरच्चन्द्रो दीपः स्वधृतिवनितासङ्गमुदितः
सुखं शान्तः शेते विगतभवभीतिर्नृपइव ॥८॥
धैर्य्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी
सत्यं सूनुरयं दया च भगिनी भ्राता मनःसंयमः ।
शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनं
यस्यैते हि कुटुम्बिनो वद सखे कस्मात् भयं योगिनः॥
धिक् धिक् तान् कुमतिविशेषवपुषः स्फुर्ज्जन्महासिद्धयो
निष्पन्दीकृतशान्तयोपि च तमः कारागृहेष्वासते ।
तं विद्वांसमिह स्तुमः करपुटीभिक्षान्नशाकोपि वा
बाला वक्त्रसरोजिनीमधुनि वा यस्याविशेषो वशः ॥१०॥
मातर्लक्ष्मि भजस्व किञ्चिदपरं मत्काङ्क्षिणी मास्मभूः
भोगेभ्यः स्पृहया लवस्तव वशाः का निस्पृहानामसि ।
सद्यः स्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते
भिक्षा शक्तुभिरेव सम्प्रति वयं वृत्तिं समीहामहे ॥११॥

जिह्वे लोचननासिके श्रवण हे त्वक्चापि न वार्य्यसे
सर्वेभ्यस्तु नमस्कृताञ्जलिरहं सप्रश्रयं प्रार्थये।
युष्माकं यदि सम्मतं तदधुना नात्मानमिच्छाम्यहं
होतुं भूमिभुजां निकारदहनज्वालाकराले गृहे॥१२॥

गतः कालो यत्र प्रणयिनि मयि प्रेमकुटिलः
कटाक्षः कालिन्दीलघुलहरिवृत्तिः प्रभवति।
इदानीमस्माकं जठरकमठीपृष्ठकठिना
मनोवृत्तिस्तत् किं व्यसनिविमुखेव क्षपयसि॥१३॥

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा जातं नारीमयमिदमशेषं जगदपि।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते॥१४॥

गतः कालो यत्र द्विचरणपशूनां क्षितिभुजां
पुरः स्वस्तील्लुब्धा विषयसुखमास्वादितमभूत्।
इदानीमस्माकं तृणमिव समस्तं कलयताम्
अपेक्षा भिक्षायामपि किमपि चेतस्त्रपयति॥१५॥

पूर्वं तावत्कुवलयदृशां लोललोलैरपाङ्गैर्
आकर्षद्भिः किमपि हृदयं पूजिता यौवनश्रीः।
संप्रत्यन्तर्निहितसदसद्भावलब्धप्रबोध
प्रत्याहारैर्विशद हृदये वर्त्तते कोऽपि भावः॥१६॥

गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य।

किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः
संप्राप्स्यन्ते जठरहरिणा गात्रकण्डूविनोदम् ॥१७॥
कदा भिक्षाभक्तैः करकलितगङ्गाम्बुतरलैः
शरीरं मे स्थास्यत्युपरतसमस्तेन्द्रियसुखं ।
कदा ब्रह्माभ्यासस्थिरतनुतयारण्यविहगाः
पतिष्यन्ति स्थाणुभ्रमहतधियः स्कन्धशिरसि ॥१८॥
रथ्यान्तश्चरतस्तथा धृतजरत्कन्थाञ्चलस्याध्वगैः
सत्रासञ्च सकौतुकञ्च सकृपं दृष्टस्य तैर्नागरैः ।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कः करटः कदा करपुटीभिक्षां विलुण्ठिष्यति॥
एणाक्षीस्पृहया लुतान कथमप्यास्ते विवेकोदयान्
नित्यं प्रच्युतिशङ्कया क्षणमपि स्वर्गे न मोदामहे ।
अप्यन्येषु विना शिवस्तु विषयाभोगेषु तृष्णा न मे
स्वर्णद्याः पुलिने परं हरिपदध्यानं मनो वाञ्छति॥२०॥
अयि बोधाम्बुधौ भावः स्वच्छोऽयं बिम्बबुद्बुदः ।
विनीत उदितो वेति विकल्पपटलं मनः ॥२१॥
अहङ्कारः क्वापि व्रजत्यजिनहेमात्वमिह भूर्
अभूमिर्दर्पाणामहमपसरत्वं पिशुन हे ।
अरे क्रोध स्थानान्तरमनुसरानन्यमनसां
त्रिलोकीनाथो नो हृदि वसतु देवो हरिरसौ ॥२२॥
मातर्माये भगिनि कुमते हे पितर्मोहजाल
व्यावर्त्तध्वं भवतु भवतामेष दीर्घो वियोगः ।

सद्यो लक्ष्मीरमणचरणभ्रष्टगङ्गाप्रवाह
व्यामिश्रायां दृषदि परमब्रह्मदृष्टिर्भवामि ॥२३॥

आदित्यस्य गतागतैरहरहः सङ्क्षीयते जीवितं
व्यापारैर् बहुकार्य्यकारणशतैः कालोऽपि न ज्ञायते।
दृष्ट्वा जन्मजरावियोगमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमोदमदिरामुन्मत्तभूतं जगत् ॥२४

मातर्मेदिनि तातमारुत सखे ज्योतिः सुबन्धो जल
भ्रातर्व्योम निबद्ध एष भवतामस्तु प्रणामाञ्जलिः ।
युष्मत्सङ्गवशोपजातसुकृतोद्रेकस्फुरन्निर्मल
ज्ञानापास्तसमस्तमोहमहिमा लीये परब्रह्मणि॥२५

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्य्यद्रुमध्वंसिनी ।
मोहावर्त्तसुदुस्तरा प्रकटितप्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥

इति शान्तिशतके ब्रह्मप्राप्तिर् नाम
चतुर्थः परिच्छेदः ॥४॥
सम्पूर्णः ॥

## वृन्दावनशतकम् ।

नमस्तस्मै कस्मैचिदपि पुरुषायाद्भुत महा
महिम्ने विभ्राजत्कनकरुचिधाम्ने स्वकृपया ।
असङ्कोचेनैव श्वपचमखिलेभ्यः स्वयमहो
ददौ यत्तद्भक्तिं विमलतरनानारसमयीं ॥१॥

यस्मिन्न प्रविशेन्मनोपि महतां का तत्त्ववार्त्ता पुनः
शास्त्राणां जपितञ्च यद्भगवता भक्तैव भक्तोद्धवे ।
तद्वृन्दावनमुन्मदेन रसिकद्वन्द्वेन केनाप्यहो
नित्यक्रीडितया गृहीतमिह के विद्युर्न गौरप्रियाः ॥२॥

गुणैः सर्वैर्हीनोप्यहमखिलजीवाधमतमो
प्यशेषैर्दोषाग्र्यैरपिच वलितो दुर्मतिरपि ।
प्रसादात्तस्यैवाविदमहह राधां व्रजपतेः
कुमारं श्रीवृन्दावनमपि स गौरो मम गतिः ॥३॥

श्रीवृन्दावनकेलिरङ्गसहजं सौन्दर्य्यशोभावयो
वैदग्ध्यादिचमत्कृतेः परतरं विश्रान्तिधामाद्भुतं ।
तन्मेमोहनदिव्यनागरवरद्वन्द्वं मिथो जीवनं
गौरश्यामलमुज्ज्वलोन्मदरसाविष्टं हृदि स्फुर्जतु ॥४॥

इह भ्रामं भ्रामं जगति नहि गन्धोपि कलितो
यदीयस्तत्रैवाखिलनिगमदुर्लक्ष्यशरणौ ।

अपारे श्रीवृन्दावनमहिमपीयूषजलधौ
महाश्चर्यौन्मीने मधुरिमनि चित्तं लगतु मे ॥५॥
जयति जयते वृन्दारण्यान्यूनसिन्धोर्
अनुपममिव सारं शारदाकोट्यकथ्यं ।
खगमृगतरुवल्लीकुञ्जवापीतडाग
स्थलगिरिह्लादिनीनामद्भुतैः सौभगाद्यैः ॥६॥
वृन्दारण्ये चर चरण दृक् पश्य वृन्दावनश्रीर्
जिह्वे वृन्दावनगुणगणान् कीर्त्तय श्रोत्र दृष्टान् ।
वृन्दाटव्या भज परिमलं घ्राण गात्र त्वमस्मिन्
वृन्दारण्ये लुठ पुलकितं कृष्णकेलिस्थलीषु ॥७॥
महोज्ज्वलरसोन्मदप्रणयसिन्धुनिःस्यन्दिनी
महामधुरराधिकारमणखेलनानन्दिनी ।
रसेन समधिष्ठिता भुवनवन्द्यया वृन्दया
चकास्तु हृदि मे हरेः परमधाम वृन्दाटवी ॥८॥
जन्मनि जन्मनि वृन्दावनभुवि वृन्दारकेन्द्रवंद्यायां ।
अपि तृणगुल्मकभावे भवतु ममाशासमुल्लासः ॥९॥
हरिपदपङ्कजसत्स्वादनरसमनुभूय पूर्वापि ।
यत्रोद्भव आशास्ते तृणतां तन्नौमि राधिकाविपिनं ॥१०॥
राधावल्लभपादपल्लवजुषां सद्धर्मनोतायुषां
नित्यं सेवितवैष्णवांघ्रिरजसां वैराग्यजीवस्पृशां ।
हन्तैकान्तरसप्रविष्टमनसामप्यस्ति सद्दूरतस्
तद्राधाकरुणावलोकमचिराद्विन्दन्तु वृन्दावने ॥११॥

राधानन्दकिशोरौ निरवधिरससागरे मग्नौ।
निजकेलिधाम वृन्दाविपिनमुदीक्ष्यैव सौख्यमाप्नुवतः॥
उद्दामप्रमदोज्ज्वलैकरसया भक्त्या विधूतान् कृते
व्यक्तं कस्यचिदेव चित्तमुदवे तत्तद्दिगाभोगवत्।
यस्मिन् दिव्यविचित्रकेलिमिथुनं तच्छ्यामगौरं विधु
ज्योत्स्नावत्परिचाययेत् तदिह किं विन्देय वृन्दावनं॥
विशुद्धाद्वैतैकप्रणयरसपीयूषजलधेर् [॥१३॥]
घनीभूतद्वीपे समुदयति वृन्दावनमहो।
मिथः प्रेमोद्घूर्णद्रसिकमिथुनक्रीडमनिशं
तदेवाध्यासीनं प्रविशति पदे क्वापि मधुरे॥१४॥
नाहं वेद्मि कथं नु माधवपदाम्भोजद्वयी ध्यायते
का वा श्रीशुकनारदाद्यकलिते मार्गेऽत्र मे योग्यता।
तस्माद्भद्रमभद्रमेव यदि नामास्तां ममैकं परं
राधाकेलिनिकुञ्जमञ्जुलतरं वृन्दावनं जीवनं॥१५॥
यत्सीमानमपि स्पृशन्न निगमो दूरात्परं लक्ष्यते
किञ्चिद्गूढतया यदेव परमानन्दोत्सवैकावधिः।
यन्माधुर्यकलाप्यवेदि न शिवब्रह्मादिभिर्यत्तद्
तद् वृन्दावननामधाम वसदं विन्दामि राधापतेः॥१६॥
कदा नु वृन्दावनकुञ्जमण्डले भ्रमं भ्रमं हेमहरिन्मणिप्रभं
संस्मृत्य संस्मृत्य तदद्भुतप्रियं द्वयं तद्द्वयं विस्मृतिमेतु मेऽखिलं
छिद्येत खण्डशइदं यदि मे शरीरं [॥१७॥]
घोरा विपद्वितचयो यदि वा पतन्ति।

हा हन्त हन्त न तथापि ममेह भूयाद्
वृन्दावनादितरतीर्थपदे यियासा ॥१८॥

स्वयं पतितपत्रकणाऽमृतवत् क्षुधाभक्षयन्
सदा मिहिरनन्दिनीशुचिपयोञ्जलीभिः पिवन् ।
कदा मधुरराधिकारमणरासकेलिस्थलिं
विलोक्य रसशेवधिमधिवसामि वृन्दावनं ॥१९॥

भूमिर्यत्र सुकोमला बहुविधप्रद्योतिरत्नच्छटा
नानाचित्रमनोहरं खगमृगाद्याश्चर्य्यरागान्वितं ।
वल्लीभूरुहजातयोद्भुततमा यत्र प्रधानादिभिस्
तन्मे नन्दकिशोरकेलिभवनं वृन्दावनं जीवनं ॥२०॥

साक्षाद्दिवास्ते पुरुषोत्तमांघ्रि
सेवारसादप्यधिको रसौघः ।
स्यन्देत वृन्दाविपिनेप्यदृष्टो
राधाप्रियो यो भुवनस्य साक्षी ॥२१॥

जागर्त्ति दुन्दुभिरवः परमोत्र राधा
वृन्दावनं वनमतिप्रकटं पुराणे ।
तस्याविधेयमसमोद्भमहानुराग
मूर्त्तिस्तदङ्गनमत्यहो प्रेत्य हरिं क्व पश्ये ॥२२॥

मिलन्तु चिन्तामणिकोटिकोटयः
स्वयं वहिर्दृष्टिमुपैतु वा हरिः ।
तथापि वृन्दावनधूलिधूसरं
न देहमन्यत्र कदापि यातु मे ॥२३॥

कृपयतु मयि वृन्दारण्यराजीमनाग
प्यतिवहनकृपोरुस्नेहभावादुदिष्णुः।
फलतु तदनुकम्पाकल्पवल्लीफलं त्वद्
प्रभवतु वसतिर्मे तत्प्रियारामसीम्नि॥२४॥
तेनाकारि समस्तएव भगवद्धर्मोऽपि तेनाद्भुतः
सर्वस्मात्पुरुषार्थतोऽपि परमः कश्चित् करस्थीकृतः।
तेनाधायि समस्तमूर्द्धनि पदं ब्रह्मादयस्तं नमन्त्य्
आदेहान्तमधारि येन वसतौ वृन्दावने निश्चयः॥२५॥
पुलिने पुलिने कलिन्दजाया
विचरस्यापि तले तले तरूणाम्।
घनीभूतसौख्यकन्दवृन्दाविपिने
हन्त कदा दिनानि नेष्ये॥२६॥
गौरश्यामलमिथुनं खेलति कन्दर्पलीलया यत्र।
राधामाधवनाम्ना प्रथितं तन्नौमि काननं किमपि॥२७
खगवृन्दं पशुवृन्दं द्रुमवल्लीवृन्दमुन्मदप्रेम्णा।
प्रीणयदद्भुतरसेन ख्यातं वृन्दावनं नमत॥२८॥
उपरमपि हरिभक्तेर् नानादुर्मार्गनिष्ठमप्यधमं।
वृन्दाविपिनमचिन्त्यप्रभावमुन्मादये प्रेम्णा॥२९॥
भक्त्यैकयान्यत्र कृतार्थमानिनो
धीरास्तदेतन्न वयं विदामः।
श्रीराधिकामाधववल्लभं नः
परन्तु वृन्दावनमेव संश्रयः॥३०॥

दोषाकरोऽहं गुणलेशहीनः
सर्वाधमो दुर्लभवस्तुकांक्षी।
वृन्दाटवीमुज्ज्वलभक्तिसार
वीजं कदा प्राप्य भवामि पूर्णः ॥३१॥

शुद्धोज्ज्वलप्रेमरसामृताब्धेर्
अनन्तपारस्य किमप्युदारं।
राधाभिधाय प्रचकास्ति सारं
तदेव वृन्दाविपिनं गतिर्मे ॥३२॥

सर्व्वसाधनहीनोऽपि वृन्दारण्यैकसंश्रयः।
यः कोऽपि प्राप्नुयादेव राधाप्रियरसोत्सवं ॥३३॥

त्यजन्तु स्वजनाः कामं देहवृत्तिश्च माऽस्तु वा।
न वृन्दावनसीमातः पदं मे चलतु क्वचित् ॥३४॥

सा मे न माता स च मे पिता न
स मे न बन्धुः स च मे सखा न।
स मे न मित्रं स च मे गुरुर् न
यो मे न वृन्दावनवासमादिशेत् ॥३५॥

तच्छास्त्रं मम कर्णमूलमपि न स्वप्नेऽपि यायादहो
यत्र वृन्दावनविपिनस्य वत्र महिमा नात्यद्भुतः सूच्यते।
ते मे दृष्टिपथं न जान्तु नितरां सम्भाष्यतामाप्नुयुर्
ये वृन्दावनवैभवे श्रुतिगते नोल्लासिनो नोखिलाः॥३६

अलमलमिह योषिद्दुर्द्धभीसङ्गरङ्गैर्
अलमलमिह वित्तापत्यविद्यायशोभिः

अलमलमिह नानासाधनायासदुःखैः
भवत भवत वृन्दारण्यमाश्रित्य धन्याः ॥३७॥
वैकुण्ठं कोटिकोटिप्रगुणितमपि नो यत्र जालेशमात्रां
प्रोन्मीलत्सौभगाब्धेर्लवमपि लभते शुद्धभावोज्ज्वलायाः ।
कुर्वीरन् भक्तिकोटीर्भगवति न तथाप्यद्भुतप्रेममूर्त्तैः
श्रीराधाया अभक्ताः किमपि न कलितां नौमि वृन्दाटवीं [तां॥३८॥]
इदमपि भविता किं यत्र कुत्रापि वृन्दा
पदमपि मम जातं श्रीवनवीथीमकस्मात् ।
मधुरमधुरराधामाधवानङ्गखेला
वनमुपनयदन्तर्दास्यति प्रेममूर्च्छां ॥३९॥
कदा नु वृन्दावनवीथिकास्वहं
परिभ्रमन् श्यामलगौरमद्भुतं ।
किशोरमूर्त्तिद्वयमेकजीवनं
पुरः स्फुरद्वीक्ष्य पतामि मूर्च्छितः ॥४०॥
किमेतादृग्भाग्यं मम कलुषमूर्त्तेरपि भवेन्
निवासो देहान्तावधि यदिह वृन्दावनभुवि ।
तयोः श्रीदम्पत्योर् नवनवविलासैर्विहरतोः
पदज्योतिःपूरैरपि तु मम सङ्गोऽपि भविता ॥४१॥
भूतं स्थावरजङ्गमात्मकमहो यत्र प्रविष्टं किमप्य्
आनन्दैकघनाकृतिस्वमहसा नित्योत्सवं भासते ।
मायान्धीकृतदृष्टिभिस्तु कलितं नानाविरूपात्मना
तद्वृन्दाविपिनं कदाधिवसतः स्यान्मे तनुश्चिन्मयी ॥४२

यत्र प्रविष्टः सकलोपि जन्तुः
सर्व्वैः पदार्थैरप्यबुधैरदृश्यः ।
स्वानन्दसम्बीतवनत्वमेति
तदेव वृन्दावनमाश्रयन्तु ॥ ४३ ॥

वृन्दावनस्थेष्वपि येत्र दोषान्
आरोपयन्ति स्थिरजङ्गमेषु ।
आनन्दमूर्त्तिष्वपराधिनस्ते
श्रीराधिकामाधवयोः कथं स्युः ॥ ४४ ॥

ये वृन्दावनवासिनिन्दितनरता ये वा न वृन्दावनं
स्नाघन्ते तुलयन्ति ये च कुधियः केनापि वृन्दावनं ।
ये वृन्दावनमत्र नित्यसुखचिद्रूपं सहन्ते नवा
तैः पापिष्ठनराधमैर् न भवतु स्वप्नेपि मे सङ्गति॥ ४५

असह्य बहुदुर्वचो यदिह वदन्ति साचान्मम
स्त्रियं बलादपहरन्ति चेत् प्रियसुतादिकं घ्नन्ति वा ।
धनाद्यपि च जीवनं यदि हरन्ति वृन्दावनस्थितास्
तदपि ते प्रिया मम भवन्ति वंद्याः परं ॥ ४६ ॥

परस्वस्तेयैकव्यसनमपि नित्यं परवधू
प्रसक्तं विश्वेषामहह बहुधा हिंसकमपि ।
दुराचारं लोभाद्दपहृतमपि भ्रातरकण
दिवान्धस्त्वं वृन्दावनगतजनं नावगणये: ॥ ४७ ॥

परधनपरदारद्वेषमात्सर्य्यलोभा
नृतपरुषपराभिद्रोहमिथ्याभिलापान् ।

त्यजति य इह भक्तो राधिकाप्राणनाथे
न खलु भवति वन्ध्या तस्य वृन्दावनाशा ॥ ४८ ॥

कुरु सकलमधर्मं मुञ्च सर्व्वं स्वधर्मं
त्यज गुरुमपि वृन्दारण्यवासानुरोधात् ।
स तव परमधर्मः सा च भक्तिर्गुरूणां
स किल कलुषराशिर्यद्धि वासान्तरायः ॥४९॥

निर्मर्य्यादाश्चर्य्यकारुण्यपूर्णौ
राधाकृष्णौ पश्यतश्चेत् कदाचित् ।
यः कोऽप्यस्मिन् यादृशस्तादृशो वा
देहस्यान्ते प्राप्नुयादेव सिद्धिम् ॥ ५० ॥

राधामधुपतिपादाम्बुजभक्ताद्दूरमुक्तस्य ।
अजितेन्द्रियस्य कृपयामम वृन्दारण्यमाश्रयोभवतु॥५१

राधामाधवपादपङ्कजरजः प्रेमोन्मदैतत्प्रिय
क्रीडाकाननवासिषु स्थिरचरप्राणिष्वपि द्रोहिषु ।
प्रद्वेषं परमापराधमहह त्यक्तैतरैरप्यघैर्
युक्तोप्यामरणान्तलब्धवसतिर् वृन्दावने स्यात्कृती॥५२

न लोकवेदोद्धतमार्गभेदैर्
आविश्य संक्लिश्यत रे विमूढाः ।
हठेन सर्व्वं परिहृत्य वृन्दा-
वनान्तरे पर्णकुटीं कुरुध्वं ॥५३॥

यत्तद्वल्कन्तु शास्त्राण्यहह जनयता गृह्यतां यत्तदेव
स्वं स्वं यत्तन्मतं स्थापयतु लघुमतिस्तर्कमाले प्रवीणः ।

अस्माकं तुज्ज्वलैकोन्मदविमलरसप्रेमपीयूषमूर्त्तेः
श्रीराधायाविहाराटविभिह न विनान्यत्र निर्याति चेतः॥
स्निग्धश्यामाभिरामच्छविमृदुमसृनोत्तप्तहेमावदातं
ज्योतिर्द्वन्द्वं किशोराकृतिमधुरमहो घूर्णमानं रसेन
नित्यं यत्रैव खेलायति मदनकलाकौतुकेनात्युदारं
सारं सारादशेषादवतुदशदिशः श्रीवृन्दावनं नः॥५५॥
अपारकरुणाकरं व्रजविलासिनीनागरं
मुहुः सुबहुकाकुभिर्नतिभिरेतदभ्यर्थये।
अनर्गलवहन्महाप्रणयसीधुसिन्धौ मम
क्वचिज्जनुषि जायतां रतिरिहैव वृन्दावने॥५६॥
नानामार्गरतोपि दुर्मतिरपि त्यक्तस्वधर्मोपि हि
स्वच्छन्दाचरितोपि दूरभगवत्सम्बन्धगन्धोपि च।
कुर्वन् यत्र च कामलोभवशतो वासं समस्तोत्तमं
चायादेव रसात्मकं परमहं तन्नौमि वृन्दावनम्॥५७॥
इह सकलसुखेभ्यः सूत्तमं भक्तिसौख्यं
तदपि चरमकाष्टां सम्यगाप्नोति यत्र।
तदिह परमपुंसो धाम वृन्दावनाख्यं
निखिलनिगमगूढं मूढबुद्धिर्न वेद॥५८॥
अजन्तमपि देवतान्तरमथाचरब्रह्मणि स्थितं
पशुवदेव वा विषयभोगमात्रे रतं।
अचिन्त्यनिजशक्तितः स्वगतराधिकामाधव
प्रगाढरसदुर्मदं कुरुत एव वृन्दावनम्॥५९॥

यत्कोट्यंशमपि स्पृशेन्न निगमो यन्नो विदुर्योगिनः
श्रीशवल्लभशुकार्जुनोद्धवमुखाः पश्यन्ति यन्न क्वचित् ।
अन्यत् किं व्रजवासिनामपि न यत् दृश्यं कदालोकये
तद् वृन्दावनरूपमद्भुतमहं राधापदैकाश्रयः ॥६०॥
विस्मृत्य द्वैतमात्रं प्रणयमयमहो ज्योतिरेकार्णवान्तः
श्रीवृन्दारण्यमत्युच्छलदतुलरसाम्भोधितस्मिन् सखे त्वं
वेशं किञ्चिद्गृहीत्वोज्ज्वलमखिलकलाकोमलाभीरवाला
प्राणाः श्रीराधिकायाः किमपि रसनिधेश्चाटुकारं भजेथाः
दुर्वासनासुदृढरज्जुशतैर्निबद्धम् [॥६१॥]
आकृष्य सर्वत इदं स्वबलेन कृष्ण ।
वृन्दावने विहरतः सह राधया ते
पादारविन्दसविधं नय मानसं मे ॥ ६२ ॥
वशीकर्तुं शक्यो नहि नहि मनागिन्द्रियगणो
गुणेष्वन्नेकोपि प्रविशति सदा दोषनिचयः ।
क्व यामः किं कुर्मो हरि हरि मयोशोष्यकरुणः
स्ववासं श्रीवृन्दावन वितर मानन्यगतिकम् ॥६३॥
जातिप्राणधनानि यान्तु सुयशोराशिः परिक्षीयतां
सद्धर्मो विलयं प्रयान्तु सततं सर्वैश्च निर्भर्त्स्यतां ।
आधिव्याधिशतेन जीर्य्यतु वपुर्लुप्तप्रतीकारतः
श्रीवृन्दाविपिनं तथापि न मनाक् त्यक्तुं ममास्तां मतिः
रक्षति संसारभयाद्देशाकारम् [॥६४॥]
अप्यशेषदेहस्मदहन्दं ।

वृन्दावनमिति तेन प्रथितं
तन्नौमि काननं किमपि ॥ ६५ ॥

वृन्दारण्याद्न्यात् प्रकृतेरन्तर्वहिर्वापि ।
नैवास्ति मधुरवस्त्वित्यवकलितं यैर् नमस्तेभ्यः ॥६६॥

विभ्राजत्तिलका कलिन्दतनयानीरौघनीलाम्बरा
उद्यंचकांचनचम्पकच्छविरहो नानारसोल्लासिनी ।
कृष्णप्रेमपयोधरेण रसदेनात्यन्तसम्मोहिनी
गोपस्त्रात्मजवल्लभा विजयते राधेव वृन्दाटवी ॥६७॥

यस्मिन् कोटिसुरद्रुमैरघुरयुता भूमीरुहः पोषका
भक्तिः सद्वनिता महारसमयी यत्र स्वयं स्निह्यति ।
यत्र श्रीहरिदासवर्य्यवनिताः खड्गायमानाः शिलास्
तद् वृन्दावनमद्भुतं सुखमयं को नाम वालम्बते ॥६८॥

निन्दन्ति यावत् प्रणयं न मन्दा
वृन्दावने प्रेमविलासकन्दे ।
तावन्न गोपिन्दपदारविन्द
स्वच्छन्दसद्भक्तिरहस्यलाभः ॥६९॥

स्मारं स्मारं नवजलधरश्यामलं धाम विद्युत्
कोटिर्ज्योतिस्तनुलतिकया राधयाश्लिष्यमाणं ।
उच्चैरुच्चैः सरससरसी प्राज्ज्वी जृम्भमाण
प्रेमाविष्टो भ्रमति सुकृती कोऽपि वृन्दावनान्तः ॥७०॥

राधापदाङ्कभूषितवृन्दारण्य
स्थलीषु निर्भरप्रेम्ना हरि हरि ।

कदा लुठामि प्रतिपद
गलदश्रुरुल्लसत्पुलकः ॥ ७१ ॥
पूर्णोज्ज्वलत्प्रेमरसैकमूर्त्तिर्
यत्रैव राधाविजयी हरीति ।
तदेव वृन्दावनमाश्रितानां
भवेत् परं भक्तिरहस्यलाभः ॥ ७२ ॥
सर्व्वं त्यक्त्वा सरसविशदप्रेमपीयूषसान्द्रे
वृन्दारण्येऽद्भुततरुलतागुल्मकाद्यैर्मनोज्ञे ।
राधाकृष्णोज्ज्वलगुणगणोद्गानमत्तालिकारैर्
नीरेणापि स्थितिमिह तनोरध्यवस्या वसन्तु ॥७३॥
श्रीराधायाः कनकरुचिज्योतिरङ्गच्छटौघैः
शुद्धप्रेमोज्ज्वलरसमयैः सेव्यमानं समन्तात् ।
गोविन्दस्याम्बुदरुचितनोर्ज्योतिरम्भोधिपूरैः
सान्द्रानन्दात्मभिरपि चितं नौमि वृन्दावनं तत्॥७४॥
निन्दा वा स्तुतिरेव वा बहुविपत्सम्पत्तिरेवास्तु वा
पाण्डित्यं बत मूर्खतापि यदि वा रागोविरागोथवा ।
यत्किञ्चिद्भवतु श्रुतेरपि मनाग्लङ्घ्यं न यद्दैभवं
तद्वृन्दाविपिनं न जीवनमहं स्यमेति हातुंक्षमः॥७५॥
चाण्डालश्वखरादिवा यदिजनाःकुर्व्वन्तिसर्व्वे तिरस्कारं
दुर्विषहञ्च तेन नहि मे खेदोस्त्यनीयानपि ।
देवा देव्य द्रुमे च भूतनिवहाः प्राणाश्च दद्युर्महा
स्नेहात्तुष्टिमतो न मे गुरुतया वन्दावनीये वसे॥७६॥

भ्रातः समस्तान्यपि साधनानि
विहाय वृन्दावनमाश्रयस्व ।
यथा तथा प्राक्तनवासनावशात्
शरीरवानी हृदयं विचेष्टतां ॥ ७७ ॥

तादृक् कालो भवतु भगवान् येन कस्मिञ्चिदैनी
दृश्या शक्तोप्यहह न वहिर्यामि वृन्दाटवीतः ।
तादृक् दम्भोप्युदयतु तथाहंकृतिश्चापि मे स्याद्
ये नाप्यस्मिन्वसमयवने रोचयेनित्यवासं ॥ ७८ ॥

वरं वृन्दारण्ये हरि हरि करे खर्परभृतो
भ्रमामो भैक्ष्यार्थं स्वपचगृहवीथीषु दिनशः ।
तथापि प्राचीनैः परमसुकृतैरत्र मिलितं
न नेष्यामोन्यत्र क्वचिदपि कथंचिद्वपुरिदं ॥ ७९ ॥

जरत्कन्थामेकां दधदपि च कौपीनमनिशं
प्रगायन् श्रीराधामधुपतिरहः केलिलहरीं ।
फलं वा मूलं वा किमपि दिवसान्ते कवलयन्
कदा नेष्ये वृन्दावनभुवि दशां जीवनमयीं ॥ ८० ॥

प्रकृत्युपरि केवले सुरनिधौ परब्रह्मणि
श्रुतिप्रथितवैभवं परपदं विकुण्ठाभिधं ।
तदन्तरखिलोज्ज्वलं जयति माथुरं मण्डलं
महारसमयं सखे कलय तत्र वृन्दावनम् ॥ ८१ ॥

कदा वृन्दारण्यं श्रवणवसनस्पर्शननिरीक्षण
घ्राणाद्यैर् मे स्फुरति वसमिच्छन् श्रवदिव ।

कदा वा तल्लोकोत्तरवसमदान्धो मधुपते
गुणानुच्चैरुच्चैः सरसमुपगास्यामि परितः ॥८२॥
स्वानन्दसच्चिद्घनरूपतामतिर्
यावन् न वृन्दावनवासिजन्तुषु।
तावत् प्रविष्टोपि न तत्र विन्दते
ततोपराधात् पदवीं परात्पराम् ॥८३॥
यदैव सच्चिद्रसरूपबुद्धिर्
वृन्दावनस्थस्थिरजङ्गमेषु।
स्यान्निर्व्यलीकं पुरुषस्तदैव
चकास्ति राधाप्रियसेविरूपः ॥८४॥
सकलविभवसारं सर्वधर्मैकसारं
सकलभजनसारं सर्वसिद्धैकसारम्।
सकलमहिमसारं वस्तु वृन्दावनान्तः
सकलमधुरिमाम्भोराशिसारं विहारम् ॥८५॥
दैवी वाक् प्रतिषेधिनी भवतु मे स्वाद्यः गुरूणां गिरां
श्रेणी शास्त्रविदामिहास्तु बहुधायःकोपि कोलाहलः।
त्यक्त्वा साधनसाध्यजातमखिलं लगेन्नु मे राधिका
क्रीडाकाननवाससम्पदि मनाक् व्यावर्त्ततेनो मनः॥८६
प्रगायन्नटन्नुच्चैस्तन्नालुठन्
वप्रे धावन् रुदन् सम्पतन् मूर्च्छितो वा।
कदा वा महाप्रेममाध्वीमदान्धस्
चरिष्यामि वृन्दावने लोकबाह्यः ॥८७॥

न लोकं न धर्मं न गेहं न देहं
न निन्दां न स्तुतिर् वापि सौख्यं न दुःखम् ।
विजानन् किमप्युन्मदप्रेममाध्व्या
ग्रहग्रस्तवत् कर्हि वृन्दावने स्याम् ॥ ८८ ॥
हरे कृष्ण कृष्णेति कृष्णेति मुख्यान्
महाश्चर्य्यनामावलीसिद्धमन्त्रान् ।
कृपामूर्त्तिचैतन्यदेवेन गीतान्
कदाभ्यस्य वृन्दावने स्यां कृतार्थः ॥ ८९ ॥
हैमस्फाटिकपद्मरागरचितैर् माहेन्द्रनीलैर्द्रुमैर्
नानारत्नमयस्थलीभिरलिभिर्भङ्कारारितोद्दल्लिभिः ।
चित्रैः कीरमयूरकोकिलमुखैर्नानाविहङ्गैर्लसत्
पद्माद्यैश्च सरोभिरद्भुतमहं ध्यायामि वृन्दावनम् ॥ ९०
ताम्बूलपानकमनोहरमोदकादि
रम्ये लसन्मृदुलपल्लवचारुतल्पे ।
दूरे स्थितालिभिरहो सुहृदावपेक्ष्य
वृन्दावनं स्मर निकुञ्जगृहैर् मनोज्ञम् ॥ ९१ ॥
क्वचिद्रतिविमर्दितप्रसवतल्पकैः कुत्रचिद्
रतोपकरणान्वितप्रियसदूप्रसूनास्तरैः ।
क्वचित् प्रमदराधिकामधुपतिप्रवृत्तोत्सवैः
सदानवनिकुञ्जकैः स्मर सुमञ्जवृन्दावनम् ॥ ९२ ॥
राधाकृष्णरहःसुहृत्तिततिधरस्तोमत्यकासुस्फुरन्
नानाकेलिनिकुञ्जवीथिषु नवोन्मीलत्कदम्बादिषु ।

भ्रामं भ्राममहर्निशं ननु परं श्रीरासकेलिस्थली
रथ्यास्वेव कदाप्रकाशितरहःप्रेमा भवेयं कृती ॥ ९३॥

अलं त्वयिसुदुःखदैर् युवति पुत्रवित्तादिकैर्
विमुक्तिकथयाप्यलं मम नमो विकुण्ठश्रीये ।
परन्त्विह भवे भवे भवतु वार्षभानव्ययो
र्व्रजेन्द्रतनयो वने लसति यत्र तस्मिन् रतिः ॥ ९४॥

नमामि वृन्दावनमेव मूर्ध्ना
वदामि वृन्दावनमेव वाचा ।
स्मरामि वृन्दावनमेव बुद्ध्या
वृन्दावनादन्यदहं न जाने ॥ ९५ ॥

राधापतिरतिकन्दं वृन्दावनमेव जीवनं येषां ।
तच्चरणाम्बुजरेणो राशामेवाहमाशासे ॥ ९६ ॥

वृण्वन्ति शुकसारिकाः सुचरितानि राधापतेस्
तदेकपरितुष्टये तरुलतासदोत्फुल्लिताः ।
सरांसि कमलोत्पलादिभिरधुश्च यत्र श्रियं
तदुत्सवकृते मनः स्मरतदेववृन्दावनम् ॥ ९७॥

नानाकेलिनिकुञ्जमण्डपयुते नानासरोवापिका
रम्ये गुल्मलताद्रुमैश्च परितो नानाविधैः शोभिते ।
नानाजातिसमुल्लसत्खगमृगैर् नानाविलासस्थली
प्रद्योतद्युति रोचिषि प्रिय कदा ध्येयोसि वृन्दावने ॥
यत्रैवातिरसम्मदं विहरते मत्प्रेष्ठवस्तुद्वयं [ ९८॥]
भक्तिः कापि महारसोत्सवमयी यत्रैव निस्यन्दते ।

तत्रैव प्रविशन्ति नैव निगमश्रेणीगिरां भङ्गयस्
तस्मिन्नेव ममास्तु धीः प्रणयिणी वृन्दावने पावने ॥९९॥
वान्या गद्गदया कदा मधुपतेर् नामानि सङ्कीर्त्तये
धाराभिर्नयनाम्भसां तदतलत्क्षौणीं कदा पङ्कये ।
दृष्ट्वा भावनया पुरोमिलदिव स्वान्तस्वभोग्यं महो
द्वन्द्वं हेमहरिन्मणिच्छवि कदा नंस्ये मुहुर्विह्वलः॥१००
वृन्दारण्यनिकुञ्जसीमनि वसन् प्रेमान्तरश्चिन्तयन्
स्वप्राणैकधनं किशोरमिथुनं द्रक्ष्याम्यकस्मात् कदा ।
श्यामाकाञ्चनचन्द्रिका रसमयी गौरीश्च काश्चित् छटाः
पश्यामिश्च शृणुयां च शीतमधुरा काश्चिन्मिथोवाक्सुधा॥
वन्दारण्ये किमपि जनतादुःप्रवेशं प्रदेशं [१०१]
गत्वा प्रोच्चैर्निजदयिततयोर्नाम जल्पन् दृशु ।
अत्यन्तार्त्या विकलविकलो दिव्यमूर्त्त्यैकयापि
श्रीस्वर्याश्चाकरम्ब गद्गद्वाग्वाक्सुधाश्वासितः स्यां ॥१०२॥
एतत्कारुण्यपुञ्जं कतिदिनकलितस्वाश्रयप्रौढ़ि राधा
कृष्णांघ्रिद्वन्द्वगूढ़प्रणयमयरसास्वाञ्जितो साधुदृष्टैः ।
श्रीमद्वृन्दावनं ये निजमहितपराकाशिरूपेण सान्द्रा
नन्दौघस्य दिवाप्रोच्चलितमधुरिमैकार्णवेनाविरास्तां ॥
कदा सुदृढ़भावनोदितनिजेष्टरूपो [१०३॥]
मनागपि स्मृतशरीरकोनहिरसप्रविष्टोद्भुते ।
क्षणं किमु मुहूर्त्तकं किमथवानमेवास्थितो
बहिर्हृगपि मुग्धवद्धा बह्वविहरामि वृन्दावने ॥१०४॥

नान्यद्वदामि न शृणोमि न चिन्तयामि
नान्यद्व्रजामि न भजामि न चाश्रयामि ।
पश्यामि जाग्रति तथा स्वप्नेऽपि नान्यत्
श्रीराधिकारतिविनोदवनं विनाहम् ॥१०५॥
किं मां खेदयसे विमुञ्च वसनं तल्पोत्तमेऽस्मिन् सुखे
नागत्य स्वपिहि त्यज त्यज भुजं क्षिप्यामि कान्ते सकृत् ।
आः किं निर्दयमुंच मुंच नकिमप्यापीडये राधिका
कृष्णालापमिमं कदानु शृणुयां वृन्दाटवीकीरतः ॥१०६॥
कदा वा स्वच्छन्दं दिनरजनि वृन्दावनवने
चरन्नेकान्तः स्वस्तुत नवनिजकुञ्जानि प्रविशन् ।
अकस्मादेकसौकिरमधुरकैशोरसुधया
इतो न त्वं याया इति मृदुगिरा वारयति मां ॥१०७॥
कदा वा तूष्णीकः शिथिलसमस्तव्यवहृतिस्
त्यजन् दीर्घश्वासं कथमपि गृहीतैककवलः ।
सदा जाग्रत्प्रायक्षणमुदिततन्द्रोतिमधुरं
तदालोके वृन्दावनभुवि निजप्राणमिथुनम् ॥१०८॥
अकस्मादेकस्मान्नवललितकुञ्जाद्गत वहिर्
भवत् स्मित्वा नव्यं तरुणमिथुनं लौकिकमिव ।
गतो दूरं दृष्ट्वा पुनरथ निवर्त्य स्वदयितौ
वितर्क्य स्वां वृन्दावनभुवि महाप्रेमविकलः ॥१०९॥
कदा पूर्णज्योत्स्नाधवलरजनौ वासवलय
चरन्नेको वृन्दावनप्रतिविलासस्मृतिपरः ।

अकस्मादानन्दाम्बुधिलहरिकोलाहलमिव
ध्वनिं दिव्यं वेणोर्विलयरसनादैश्च शृणुयां ॥११०॥
कदा वा कस्यापि स्फुटनवकदम्बस्य विटपे
स्फुरद्गोपीभर्त्तुः किमपि कवये स्मेरवदनं ।
कदा श्रीराधायाः कुसुमचयलीलाञ्चलखितं
करं द्रक्षे वृन्दावनभुवि लतासु क्वचिदपि ॥१११॥
इदं मे किं भावि स्रुतकनकगौरच्छवि हरिन्
मणिश्यामं धामद्वयमिह मिथो मेऽर्पितभुजं ।
निरीक्षे तत्स्मेरं बहुविध महाप्रेमविहृतिं
सितं पश्चाच्छायाद्वयमथ पुरो मूर्च्छयति मां ॥११२॥
अपि प्रेमोत्कण्ठ्यात्क्षितिषु विलुठत् स्वं वपुरिदं
करेण स्पृष्ट्वा मामनुचरयते राधा प्रिययुता ।
अहो वृन्दारण्ये ऽद्भुतमहिमसीमन्यपि सुदुर्
घटाशा काप्येका समुदयति हा किं न भविता ॥११३॥
कदा वा कालिन्दीतटनिकटवृन्दावनलता
निकुञ्जान्तः सुप्तं तदतिसरसं प्रेष्ठमिथुनं ।
मिथो गाढाश्लिष्टं मृदु मृदु मया लालितपदं
मुदा वीक्षे स्वप्नेष्वहह सुखनिद्रागतमहं ॥११४॥
महाश्चर्य्यानन्तस्वमहिमबलादेव सकला
समस्याप्याशानां व्यतिकरमसम्भाव्यमपि मे ।
कदा वृन्दारण्यं स्ववसतिकथामात्रनिवहत्
कृपापूरं सम्पूरयतु परतोऽप्यर्बुदजनैः ॥११५॥

स्वकर्मस्रोतोभिः सततमभितश्चालितममुं
प्रभो जीवं यत्र क्वचिदपि न यात्यन्तविवशं।
परन्त्वेतावन्मे भवतु भवदुःखार्दितहृदो
प्यविश्रान्तं वृन्दावनपदपरे वास्तु रसना ॥११६॥
न सत्याख्ये लोके स्पृहयति मनो ब्रह्मपदवीं
न वैकुण्ठे विष्णोरपि मृगयते पार्षदतनुं।
अपि श्रीवृन्दावनसरसभावोत्सवरतां
निवासे धन्यानां सुवर्क्षक्रमिजन्मापि मनुते ॥११७॥
श्रीमद्वृन्दाविपिनकुसुमामोदवाही समीरो
यस्मिन् देशे सरति तदवच्छिन्नकृष्णाप्लुतो वा।
येषां वृन्दावनमनुसकृद् ग्रीवया सन्नतं वा
तत्रैवा स्तां मम खलु जनिर्हन्त तेषां गृहेपि ॥११८॥
ममापि स्यादेतादृशमपि दिनं किन्नु परमं
यदा वृन्दाटव्याः कथमपि कृतस्पर्शनमपि।
अहोदेहं दूरादपि समवलोक्यापि जनुषां
मुहुर्धन्यं मन्ये धरणिपतित स्यां कृतनतिः ॥११९॥
यदपि च मम नास्ति श्रीलवृन्दावनीये
महिमनि न समीहे हन्त विश्वासगन्धः।
यदपि मम न तस्मिन्नास्ति वासेषनापि
प्रसरतु मम तादृश्येव वाणी तथापि ॥१२०॥
अचैतन्यप्रायं जगदिदमहो सर्वविदपि
प्रथीयः श्रीवृन्दावनमहिमबीजाज्ञनिमतिः।

अहो भाग्यद्दृष्ट्वा विविधसदसद्धर्म्मसु तथा
न पूर्णं स्याच्चित्तं परमिह निषेवे पदरजः ॥१२१॥
हा वृन्दावन हा महारसमय प्रेमैकसम्पन्निधे
हा राधावति नागरस्मरकला सान्निध्यदैकप्रिय ।
हा रासेश्वरविश्वमूर्च्छनलतावल्लीखगाद्यद्भुत
श्रीमद्वाप्रकृतेः परादपि पर त्वं मे गतिस्त्वंगतिः॥१२२
नमोस्तु वृन्दावनसुन्दराभ्यां
नमोस्तु वृन्दावनविभ्रमाभ्यां ।
नमोस्तु वृन्दावनजीवनाभ्यां
नमोस्तु वृन्दावननागराभ्यां ॥१२३॥
नमोस्तु वृन्दावनसत्स्वरूपाभ्यां
नमोस्तु वृन्दावनसद्रसाभ्यां ।
नमोस्तु वृन्दावनपूर्णताभ्यां
नमोस्तु वृन्दावनगोचराभ्यां ॥१२४॥
वृन्दारण्योत्तमं नास्ति नास्ति मत्तोधमः क्वचित् ।
राधानाथः प्रभावेन यदि स्यान्मेलनं तयोः ॥१२५॥
श्रीमद्वृन्दावने सर्व्वाः सच्चिन्नामैकमङ्गलम् ।
सर्वाश्चर्य्यानन्तशक्ति मुखे विजयतां मम ॥१२६॥

इति श्रीवृन्दावनशतकं समाप्तम् ॥

## वृन्दावनयमकम्।

वरदाय नमो हरये
पतति जनो यं स्मरन्नपि न मोहरये।
वज्रमसक्रं दहता
मनसि दितिर् येन दैत्यचक्रं दहता ॥ १ ॥
स्वमिव भुजं गवि शेषं
व्युपधाय स्वपिति यो भुजङ्ग विशेषं
नवपुष्करसमकरया
श्रीयोर्मि पंक्त्या च सेवितः समकरया ॥ २ ॥
येन च बलिरसुरोधः
समवस्थापितः क्षितेरसुरोधः।
पृथुकः सन्निभवदनः
चिक्षेप च यः सरोजसन्निभवदनः ॥ ३ ॥

## विशेषकम् ॥

स्तौमि च लाङ्गलवन्तं
देवं यः संयुगे च लाङ्गलवन्तं।

कपिमकरोदसुरहितं
द्विविदं दृढमुष्टिताडनादसुरहितं ॥ ४ ॥
आपानपरम्परया
भेजे यं रेवती जितपरम्परया ।
विभ्रतमालानामौ
बाह्वमग्नकुसुमाश्च माला नामौ ॥ ५ ॥
यो रूढमदारुणया
तन्वा प्रणतं प्रतिद्विषमदारुणया ।
कर्षितदानवकुलया
विबभौ गन्धविजितेभदानवकुलया ॥ ६ ॥
ग्रहपतिरिव हिमहीनः
कान्त्याभूदुग्रसेन इति हि महीनः ।
प्रकृतिभिररिहेतीह
स्वयं वृत्तः संहताभिररिहेतीहः ॥ ७ ॥
वलभिदरीभागानां
जेता विन्ध्यर्द्धवदरीभागानां
शौकल्या दाशार्हस्य
प्रभवो यशसः समस्य दाशार्हस्य ॥ ८ ॥
यो भोक्तेव सुधायाः
वर्णकविः शासिता च वसुधायाः ।
यस्य पराभुदधीनां
तटेषु दर्त्तिं प्रचक्षते मुदधीनां ॥ ९ ॥

भरत इव विभावसवः
सर्व्वेषां प्राणिनामथ विभावसवः ।
यस्मिन्वसुधामवति
स्थिरा बभुवुः समाश्च वसुधामवति ॥१०॥
अनुकृत्य रघो राज्ञः
प्रत्याख्याताघनः प्रभुरघो राज्ञः ।
योगिभिरित्यस्तमितः
केशवमाप्नोमि नायमस्तमितः ॥ ११ ॥
तस्येयमकार्य्येभ्यश्,
च्युतेन तनयेन रचितयमकार्य्येभ्यः ।
वृत्ता वाक् स्वाकृतिना
मानाङ्केन हरिसंख्यया स्वाकृतिना ॥ १२ ॥
अथ जग्मतुरुरुमत्तौ
वयसा वृन्दावनान्तरं रुरुमत्तौ ।
हरिराहितकुमुदसितः
स्निग्धतराङ्गस्तथा हली कुमुदसितः ॥ १३ ॥
उदधिपयोनिर्घोषं
तत्र निवेश्याच्युतोऽपयोनिर्घोषं ।
अविचिन्तितकंसबलम्
चचार भेजे च यामुनकं सबलः ॥ १४ ॥
प्रियसुहृदामोदरयोर्
ललतो रयरौहिणेयदामोदरयोः ।

कृतपशुवृन्दावनयोर्

घर्मः क्षयमापदयितवृन्दावनयोः ॥ १५ ॥

क्षोभमगाद्भ्राणां

स्तनितैर्विद्युत्वतामगाद्भ्राणां ।

मुनिरपि नीरागमनाः

सरितश्चासन्नवृत्तनीरागमनाः ॥ १६ ॥

रौद्रं कन्दर्पस्य

प्रथमो हेतुर् बभूव कन्दर्पस्य ।

स्त्रीहृदयान्यभिदनतः

सघृणैः प्राप्य सुहृदो घनानभिदनतः ॥ १७ ॥

विद्युद्गौरी हावान्

असृतेव घनेष्वभूच्च गौरीहावान् ।

सुलभवलाकायेषु

ग्लपितचिरप्रोषितवलाकायेषु ॥ १८ ॥

जात्या सज्जालकया

यूथिकया चाप्नयुवतिसज्जालकया ।

कमलानि समर्ज्जांध्यां

भ्रमरः कृष्णो बलादिव समर्ज्जांध्यां ॥ १९ ॥

व्याप्य दिशो दश निभ्नतः

क्षणमपि तस्थौ श्वासनादसनिभ्नतः ।

संस्मितागवलस्य

ध्वनत् घनौघसमप्रभोगवलस्य ॥ २० ॥

भ्रमर दश कदम्बरजः
त्वमितीव वदन् स्वनादशकदम्बरजः ।
हन्तुं विभ्रमरहितां
नलिनीं पथिकाङ्गनाञ्च विभ्रमरहितां ॥ २१ ॥
ज्योत्स्नालं घनमलिना
न बभौ क्रियते स्म कुटजलङ्घनमलिना ।
वलवानवपूरोहन्
हृद्यास नदीतटांश्च नवपूरोऽहन् ॥ २२ ॥
शिखिषु समुत्सु कमनसो
गतिहरमुञ्चति च खे समुत्सुकमनसः ।
व्यमुञ्चन्नपवनजवना
वापीर्हंसाश्च न पवनजवनाः ॥ २३ ॥
शब्दो नादेयानां
कलुषतया नो शशाम नादेयानां ।
फेनी वा नीराणां
आक्रष्टोभयतटान्तवानीराणां ॥ २४ ॥
प्राप्य सखद्योतायां
निशि विद्युज्जितमरुत्सखद्योतायां ।
प्रियतमसदनं गेहा
दवला भयमुत्ससर्ज्ज सदनं गेहा ॥ २५ ॥
पर्व्वतकटकेशानां
नीपरजः कपित्थकम्भकटकेशानां ।

कुञ्जनदीनगजानां
हर्षो जज्ञे महान्नदीनगजानां ॥ २६ ॥
विविधोपलराशिखरं
पिदधे गोवर्द्धनं तृणैराशिखरं ।
कालोऽगन्धारावान्
अकरोत्कुटजशिखिनाञ्च गन्धारावान् ॥ २७ ॥
कणिकाभिरपां सुखरा
वृन्दावनमारुता ववुरपांशुखरा ।
यमुना नवमुदकपटं
भेजे व्रजलोकमाश्रिता मुदकपटं ॥ २८ ॥
अतपनवसुदे वसुतौ
व्रजस्य साभ्रे ततोऽह्नि वसुदेवसुतौ ।
अमृतसमधुनीपवनं
वृन्दावनमविशतां समधुनीपवनं ॥ २९ ॥
शिखिसर्वस्वधरस्य
हे प्रियतां जग्मतुर्हरेः स्वधरस्य ।
भ्रमरकदम्बकरवहा
वेणुः प्रावृट् तथा कदम्बकरवहा ॥ ३० ॥
अंशादामोदस्य
स्थानमवभ्रंशि नीपदामोदस्य ।
यीर्ललितमथो व्रजतः
कापि बभूवास्य सुष्टिकमथो व्रजतः ॥ ३१ ॥

धृतकामधुरैर् मधुरैर्
भ्रमरैर्भ्यो मुदितवल्लवकुलैर्वकुलैः ।
व्रतकेशिशिराः शिशिराः
स्थलीर्युताः प्रायसोऽस्तसुरभीः सुरभीः ॥ ३१ ॥
ता वृषभरणाभरणा
स्तेनयुताः स्वयमिवाञ्जनभसा नभसा ।
रेजुः सुतरां सुतरां
यमुनामभितः सवञ्जुललता ललता ॥ ३२ ॥
श्रेष्ठपदारोहिण्याः
सुतोप्यलंघ्यमहिमा पदारोहिण्याः ।
प्राप्य शरीरं रन्तुं गां
द्युतिञ्च स इवागतः शरीरं तुङ्गां ॥ ३४ ॥
निचुलवतीं ककुभानां
समो मतिक्षान्तिकान्तिभिः ककुभानां ।
अंशेन स्वनवद्यां
स्रजं वहन्नपिवदलिकुलं स्वनवद्यां ॥ ३५ ॥
दृष्ट्योद्भवलासितया
लिम्पन्निव दिङ्मुखानि धवलासितया ।
वङ्गधा पवनेच्छायां
प्रावृषि मेघानुयातपवनेच्छायां ॥ ३६ ॥
अथ स वलक्षोभानां
पतिरिव कर्त्तारमरिवलक्षोभानां ।

सुसलीदं तुरगहनं
वीक्ष्य गिरिं प्राह कुटजदन्तुरगहनं ॥ ३७ ॥

विद्धच्छन्नः छन्नः
कुटजैः चरति प्रगीतगोपो गोपः ।
प्रस्वनदम्भो दम्भः
सृष्टिविशेषो यमतुलधातुर् धातुः ॥ ३८ ॥

पश्य श्यामा श्यामा
वनस्थली भाति बलवदृष्टश्या दृश्या ।
प्रदरा धारा धारा
धुन्वन्ति मेघाम्ब शिरसि हन्ते हन्ते ॥ ३९ ॥

अस्मासु कन्दलदशनैर्
ऋद्दमति दरीमुखैश्च कन्दलदशनैः ।
दीयतोच्युत हेममयः
तव च रवीन्दोरिवाचलो हेममयः ॥ ४० ॥

शकुनिपताकाशबलं
वनदृन्दचक्षुषा पताकाशवलं ।
रूपं हारीतानां
प्रियं वनानां च मत्तहारीतानां ॥ ४१ ॥

एवं स्म हरे शेषे
बान्धवान् वीक्ष्य भूस्समहरे शेषे ।
अनितरतिरसावसितैर्
आदाय तडिद्गुणार्णवरसावसितैः ॥ ४२ ॥

कार्मुकवलयमनूनं
दिशसि यत्तोषितोसि वलयमनूनं ।
इत्याशासुखरतया
घनराज्या हरिरिवोच्यते मुखरतया ॥ ४३ ॥

न तवोपरि विर्हैण
ग्रथिताभरणस्य गोपपरिवर्हैण ।
छायामसितापघनः
सुरचापाङ्कः परैरकसितापघनः ॥ ४४ ॥

हतगिरिधातुरसङ्गा
रुध्वा तव भुजसमोर्मिधातुरसङ्गा ।
कुलानि खनद्यमुना
वहति जलमसौ विसर्पति खनद्यमुना ॥ ४५ ॥

पवनैरजसा ध्वस्तं
विभ्राणां नीपमत्सरजसा ध्वस्तं ।
पश्यैकान्ततरलतां
स्थलीमितां वर्हियोगकान्ततरलतां ॥ ४६ ॥

वसने संस्तवन नवा
जेतुमलममोघ संस्तवन नवा ।
मधुकरविश्वसितानि
स्मितमिह कुटजानि जनितविश्वसितानि ॥ ४७ ॥

मारुतवेगाद्धुतवन्नवशशिखण्डानां
मुक्तापाङ्गविडम्बितनवशशिखण्डानां ।

सङ्गाः शिखिनां प्राप्ताः शङ्के कायन्ते
स्मृतघनमिति मन्वानाः शङ्के कायन्ते ॥४८॥
पश्य शिलाः शैलेस्मिन्नुच्चावचसानौ
यांत्युन्मुखवर्हिणतामुच्चावचसानौ।
अमुना शमितरिपुस्त्रीशृङ्गारोहित्वं
याचित इवांबुनादैः शृङ्गारोहित्वं ॥४९॥
नदति जलदैर्निदाघे सारङ्गोपास्ते
बिभ्रति केतकभवनैः सारङ्गोपास्ते।
सम्प्रत्युद्यमकालो न वाहिनीपानां
त्वन्मुखसुरभीणां च श्रीर्नवा हि नीपानां ॥५०॥
इत्याह पीतवाससमायतनेत्रस्तं
कंसासुरात्प्रभुमतामायतनेत्रस्तं।
हसितानां विमलतया स हली लाजानां
छायां विकिरन्द्भ्यनैः सह लीलाजानां ॥५१॥

इति श्रीवृन्दावनं नाम यमककाव्यं
मानाङ्ककृतं समाप्तम् ॥

## रामकृष्णविलोमकाव्यम् ।

तं भूसुतामुक्तिमुदारहासं
वन्दे यतो भव्यभवं दयाश्रीः ।
श्रीयादवं भव्यभतोयदेवं
संहारदा मुक्तिमुतासुभूतम् ॥ १ ॥
चिरं विरञ्चिर्न चिरं विरञ्चिः
साकारता सत्यसतारका सा ।
साकारता सत्यसतारका सा
चिरं विरञ्चिर्न चिरं विरञ्चिः ॥ २ ॥
तामसीत्यसति सत्यसीमता
माययाक्ष्मसमक्ष्ययायमा ।
माययाक्ष्मसमक्ष्ययायमा
तामसीत्यसति सत्यसीमता ॥ ३ ॥
का तापघ्नी तारकाद्या विपापा
वेधा विद्या नोष्णकृत्यं निवासे ।
सेवा नित्यं कृष्णनोद्या विधात्वे
पापाविद्याकारताघ्नी पताका ॥ ४ ॥

श्रीरामतो मध्यमतोदि येन
धीरोऽनिशं वश्यवतीवराद्वा ।
द्वारावती वश्यवशं निरोधी
नयेदितो मध्यमतोऽमरा श्रीः ॥ ५ ॥
कौशिके विततपसि चरव्रती
योऽददाद्द्वितनयस्वमातुरम् ।
रन्तुमास्वयन लद्विदादयो
तीव्ररक्षसि पतत्विकेशिकौ ॥ ६ ॥
लम्बाधरोरु लयलम्बनासे
त्वं याहि याहि चरमागताज्ञा ।
ज्ञातागमा रच हि याहि या त्वं
सेना बलं यत्र करोध बालम् ॥ ७ ॥
लङ्कायना नित्यगमा धवाशा
साकं तयानुन्नयमानुकारा ।
राकानुमा यन्ननु यातकंसा
शावाधमागत्य निनाय कालम् ॥ ८ ॥
गाधिजाध्वरवैरा ये तेऽतीता रक्षसा मताः ।
तामसाक्षरतातीते ये रावैरध्वजाधिगाः ॥ ९ ॥
तावदेव दया देवे यागे यावदवासना ।
नासवावदया गेया वेदे यादवदेवता ॥ १० ॥
सभास्वये मग्नमजेन चापं
कीनाशतानङ्गरुषा शिलाशैः ।

शैलाधिपाकृष्टनताम्रनाको
पञ्चानने मग्नभयेक्षमाप्तः ॥ ११ ॥
न वेद यामक्षरभामसीतां
का तारका विष्णुजिते विवादे ।
देवाविते जिष्णुविकारता का
तां सीमभारक्षम यादवेन ॥ १२ ॥
तीव्रगोरन्वयत्रार्यो वैदेहीमनसो मतः ।
तमसो न महीदेवैर्योत्रायन्वरगो व्रती ॥ १३ ॥
वेद या पद्मसदनं साधारावततार सा ।
सारता तव राधा सा नन्दसद्मप यादवे ॥ १४ ॥
शैवतो हननेऽरोधी यो देवेषु नृपोत्सवः ।
वत्सपो नृषु वेदे यो धीरो नेन हतो वशैः ॥ १५ ॥
न गोपगोप्सि च्चर मे पिनाके
नापो जने धर्मधनेन दानम् ।
नन्दानने धर्मधने जपो ना
के नापि मे रक्षसि गोपगोनः ॥ १६ ॥
ततान दाम प्रमदा पदाय
नेमे कचामक्षम सुन्दराक्षी ।
क्षीरादसुं न क्षमचारु मेने
यदापदाम प्रमदा न तातः ॥ १७ ॥
तामितो मत्तहलामा शापादेष विगानतां ।
तां नगाविषदे पाशा मालाहत्तमतो मिता ॥१८॥

नासावधापत्रपाक्षाविवोदी
धीरो नुत्या सस्मितोऽद्याविगीत्या।
त्यागी विद्यातोऽस्मि सत्यानुरोधी
दीनो विक्षापात्रपधावसाना॥ १९॥

सम्भावितं भिक्षुरगाद्गारं
याताधिराप स्वनवाजवंश:।
शवं जघान स्वपराधिता या
रङ्गाद्गारक्षुभितं विभासम्॥ २०॥

तपातितार: स्वनयागतं मा
लोकापवाद्द्वितयं पिनाके।
केनापि यं तद्विपवाप काले
मातङ्गयान स्वरतातिपात:॥ २१॥

शवेऽविदा चित्रकुरङ्गमाला
पञ्चावटीनर्म न रोचते वा।
वाते चरो नर्म नटीव चापं
लामागरं कुत्रचिदाविवेश॥ २२॥

नेह वा क्षिपसि पक्षिकन्धरा
मालिनी स्वमतमत्त दूयते।
ते यदूत्तम तमस्वनीलिमा
ऽराधकं क्षिपसि पक्षिवाहने॥२३॥

वनान्तयान स्वणुवेदनासु
योषामृते रराघवजाविरोधी।

धीरो विज्ञागपरा रते स्पषा यो
सुनादवेणुस्वनया तनां वः ॥ २४ ॥
किन्नु तोयरसापम्या न सेवा नियतेन वैः ।
वैनतेयनिवासेन पापं सारयतो नु किं ॥ २५ ॥
स न तातप्रहा तेने स्वं शेनाविह्नितागसं ।
सङ्गताह्नि विनाशे स्वं नेतेहापततान सः ॥२६॥
कपितालविभागेन योषाद्दो नुनयेन सः ।
सनये न नु दोषायो नगेभा विलतापिकः ॥२७॥
ते सभा प्रकपिवर्णमालिका
नाल्पकप्रसरमभ्रकल्पिता ।
ताल्पिकभ्रमरसप्रकल्पना
कालिमार्णवपिक प्रभासते ॥ २८ ॥
रावणोऽक्षिपत न वपान्तते
नाल्पकभ्रमणमक्रमातुरम् ।
रन्तुमाक्रमणमभ्रकल्पना
ते न पाव नतपक्षिणो वराः ॥ २९ ॥
दैवे योगे सेवादानं शङ्कानापे लङ्कायाने ।
नेया कालं पेनाकाशं नन्दाग्रासे गेयो वेदैः ॥३०॥
शङ्का वज्रानुल्व नुन्नावकाशं
याने नद्यामुद्यानने यः ।
याने नद्यामुद्यानने या
शङ्कावज्रानुल्वनुन्नावकाशम् ॥३१॥

वादिदैंघ द्विसीतापं पम्पाथायनसेतवे ।
वेतसेन यथा पापं पन्तासीद्विघदे दिवा ॥३२॥

वायुजोनुमतो मेने संग्रामे रवितोऽह्नि वः ।
वह्नितो विरमे ग्रासं नेमेऽतोऽत्रनुजो युवा ॥३३॥

त्ततायमा यत्र रघोरितायु
रङ्कानुगानल्पवयोऽयनानि ।
निनाय योवल्पतगानुकारं
यु तारिघोर त्रयमायतात्त्तः ॥ २४ ॥

तारके रिपुराप श्रीरुचा दाससुतान्वितः ।
तन्वितासु सदाचारु श्रोपरा पुरिके रता ॥ ३५ ॥

लङ्कारङ्कागाराध्यासं याने सेया काराव्यासे ।
सेव्या राका यासे नेया सन्ध्या रागाकारं कालं ॥३६॥

गोदावरी वह्निगिरेः सकाशात्
समापिता प्रागुदधिं प्रयत्नात् ।
घनर्षिणा सोपि पुनः प्रतीप
मानेतुमर्द्धिं प्रभवेत्किमेतां ॥ ३७ ॥

एवं विलोमाक्षरकाव्यकर्तुर्
बुधः सभायां समवेक्ष्य तज्ज्ञाः ।
दानंत्विमां चित्रकवित्वसीमां
दैवज्ञसूर्याभिधसंप्रदिष्टाम् ॥३८॥

इति श्रीदैवज्ञपण्डितसूर्यकविविरचितं
विलोमाक्षररामकृष्णकाव्यं समाप्तम् ।

## गङ्गाष्टकम् ।



यदवधि तव नीरं पातकी नैति गङ्गे
तदवधि मलजालैर् नैव मुक्तः कलौ स्यात् ।
तव जलकणिकालं पापिनां पापशुध्यै
पतितपरमदीनान् त्वं हि पासि प्रपन्नान् ॥१॥
तव शिवजललेशं वायुनीतं समेत्य
सपदि निरयजालं शून्यतामेति गङ्गे ।
समलगिरिसमूहाः प्रस्फुटन्ति प्रचण्डास्
त्वयि सखि विशतां नः पापशङ्का कुतः स्यात् ॥२॥
तव शिवजलजालं निःसृतं यर्हि गङ्गे
सकलभुवनजालं पूतपूतं तदाभूत् ।
यमभटकलिवार्त्ता देवि लुप्ता यमोपि
व्यधिकृतवरदेहाः पूर्णकामाः सकामाः ॥३॥
मधुमधुवनपूगै रत्नपूगैर्नृपूगैर्
मधुमधुवनपूगैर्देवपूगैः सुपूगैः ।
पुरहरपरमाङ्गे भासि मायेव गङ्गे
शमयसि त्रिपतापं देवदेवस्य वन्द्ये ॥४॥

चलितशशिकुलाभश्चत्तरङ्गैस्तरङ्गैर्
अमितनदनदीनामङ्गसङ्गैरसङ्गैः ।
विहरसि जगदण्डे खण्डयन्ती गिरीन्द्रान्
रमयसि निजकान्तं सागरं कान्तकान्ते ॥५॥

तव परमहिमानं चित्तवाचाममानं
हरिहरविधिशक्रा नापि गङ्गे विदन्ति ।
श्रुतिकुलमभिधत्ते शङ्कितं तं गुणान्तं
गुणगणसुविलासैर् नेति नेतीति सत्यं ॥६॥

तव नुतिनतिनामान्यप्यघं पावयन्ति
ददति परमशान्तिं दिव्यं भोगान् जनानां ।
इति पतितशरण्ये त्वां प्रपन्नोस्मि मातर्
ललिततरतरङ्गे चाङ्गगङ्गे प्रसीद ॥७॥

शुभतरकृतयोगाद्विश्वनाथप्रसादाद्
भवहरवरविद्यां प्राप्य काश्यां हि गङ्गे ।
भगवति तव तीरे नीरसारं निपीय
मुदितहृदयकञ्जे नन्दसूनुं भजेहं ॥ ८ ॥

गङ्गाष्टकमिदं कृत्वा भुक्तिमुक्तिप्रदं नृणां ।
सत्यज्ञानानन्दतीर्थयतिना स्वर्पितं शिवे ॥९॥
तेन प्रीणातु भगवान् शिवो गङ्गाधरो विभुः ।
करोतु शङ्करः काश्यां जनानां सन्ततं शिवम् ॥१०॥

इति सत्यज्ञानानन्दतीर्थयतिना विरचितं
गङ्गाष्टकं समाप्तम् ॥

## मणिकर्णिकामहिमा ।

अनेकजन्मसाहस्रतपोध्यानशिवार्च्चनैः ।
अद्वैतानन्दसङ्गेन लब्धवेदान्तिसत्पदः ॥१॥
सदाशिवसुतः शान्तः काश्यां गङ्गाधरः कविः ।
सर्वतीर्थवरां देवीं स्तौति श्रीमणिकर्णिकाम् ॥२॥
आनन्दकाननमिदं सुखदं पुरैव
तत्रापि चक्रसरसि मणिकर्णिकाख्य ।
स्वःसिन्धुसङ्गतिरथो परमास्पदञ्च
विश्वेशितुः किमिह तन्न विमुक्तये यत् ॥३॥
गर्जन्ति सर्वतीर्थानि स्वस्वधिष्ण्यगतान्यहो ।
केवलं बलमासाद्य सुमहन्माणिकर्णिकम् ॥४॥
शिवाद्या देवसङ्घाश्च सनकाद्या महर्षयः ।
ते सर्वे स्नातुमायान्ति मध्याह्ने मणिकर्णिकाम् ॥५॥
इच्छन्ति मरणं तत्र मुक्तये चामरा अपि ।
अतश्च स्वकृतैः श्लोकैस् तां देवीं प्रार्थयेऽन्वहम् ॥६॥

### मणिकर्णिकाष्टकम् ।

विष्णोः सुतप्ततपसां चलितोत्तमाङ्ग
विश्वेशितुस्तडिदिवाम्बरतः सुकर्णात् ।

या चक्रतीर्थसलिले ललितापपात:
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥७॥
चिन्तामणिस्तनुभृतां सहसान्तकाले
तत्तारकं व्यपदिशत्यथ कर्णिकायाम् ।
यस्यां मृतो न भवमेति भवप्रसादात्
सामेसदा शिवकरी मणिकर्णिकास्तु ॥८॥
चन्द्रांसुका सुनयना धवला कुमारी
वेदैश्च पाणिकमलैर्वरमौक्तिकान्त्या ।
या दृश्यते सुकृतिभिर्वरकाशिकायां
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥६॥
मालां सुपङ्कजमयीं करकण्ठयोर् या
धत्ते वरोद्यतकरे शुभमातुलाङ्गम् ।
वहञ्च पाणियुगलं शुभपश्चिमाख्यं
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥१०॥
दानावगाहसुरपूजनतर्पणादि
यस्यामनन्तफलदं भवति प्रसङ्गात् ।
भक्त्या कृतं यदि सएव जगत्पुनाति
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥११॥
स्वर्गस्तृणं भवति चौरधरोपि राजा
मृत्युः सखा सुखहरोपि शवः शिवः स्यात् ।
पातोपि यत्र सुरसम्मत उत्तमाद्या
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥१२॥

सुप्तोऽपि योगिसमतां समुपैति यत्र
मग्नः स्मरेद्यदि शिवं स तु कालकालः ।
यद्धानतोऽप्यभयमेति च दूरवासी
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥१३॥

यत्सङ्गिवायुरपि दूरगतः सुदूरगः
पातालगं सुरगतं विधिगं करोति ।
जन्तून् पुनाति सकलानपि गां गता या
सा मे सदा शिवकरी मणिकर्णिकास्तु ॥१४॥

संसारचिन्तामणिरत्र यस्मात्
तत्तारकं सज्जनकर्णिकायां ।
शिवोऽविधत्ते सहसान्तकाले
तद्गीयतेऽसौ मणिकर्णिकेति ॥१५॥

मोक्षलक्ष्मीमहापीठमणिस्तच्चरणाब्जयोः ।
कर्णिकेति ततः प्राहुर् यां जना मणिकर्णिकां ॥१६॥

मणिकर्ण्याः स्तोत्रमिदं भुक्तिमुक्तिप्रदम्वरं ।
पठतां शृण्वताञ्चास्तु प्रपन्ना मणिकर्णिका ॥१७॥

इति श्रीगङ्गाधरकवि विरचितं श्रीमणि
कर्णिकास्तोत्रं सम्पूर्णम् ॥

काशीस्तोत्रम् ।



सत्यज्ञानानन्दतीर्थं प्राप्तोऽहं यत्प्रसादतः ।
तं गुरुं परमं हंसं विश्वेश्वरमजं भजे ॥ १ ॥
विश्वेशं माधवं ढुंढिं दण्डपाणिञ्च भैरवं ।
वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकां ॥ २ ॥
अखण्डः सच्चिदानन्दः शिवो देवो महेश्वरः ।
तस्य तां परमां शक्तिं काशीं स्तौमि सदुक्तिभिः ॥ ३ ॥
श्यामां षोडशवार्षिकीं सकरुणां मूर्त्तिं दधानां वरां
हस्ताभ्यामभयं च विश्वजननीं विद्येति या गीयते ।
या दृष्टा स्मरणं गतापि सततं या कीर्त्तिता संस्तुता
या स्पृष्टा प्रणता स्तुता प्रकुरुते नृणां परं मङ्गलं ॥ ४ ॥
भूमिष्ठापि न यात्र भूस्त्रिदिवतोऽप्युच्चैरधःस्थापि या
या बद्धा भुविमुक्तिदा स्युरमृतं यस्यां मृता जन्तवः ।
या नित्यं त्रिजगत्पवित्रतटिनीतीरे सुरैः सेव्यते
सा काशीत्रिपुरारिराजनगरी पायादपायाज्जगत् ॥ ५ ॥
पूर्व्वजन्मशतकोटिसञ्चितं
पापराशिमतुलं विनाशयेत् ।

काशिका परपदप्रकाशिका
दर्शनश्रवणकीर्त्तनादिभिः ॥६॥
यः काशीं स्तौमि मेधावी यः काशीं हृदि धारयेत्।
तेन तप्तं तपस्तीव्रं तेनेष्टं क्रतुकोटिभिः ॥७॥
वाराणसीति काशीति महामन्त्रमिमं जपन्।
यावज्जीवन् त्रिसन्ध्यं तु जन्तुर्जातु न जायते ॥८॥
यस्तु काशीति काशीति द्विस्त्रिर्जपति पुण्यवान्।
अपि सर्वपवित्रेभ्यः स पवित्रतरो महान् ॥९॥
मुने न मे प्रियस्तद्वद्बोचितो मम पूजकः।
यादृक् प्रियतरः सत्यङ्काशीस्तवनलालसः ॥१०॥
वरङ्काशीपुरीवासो मासोपवासनादिभिः।
विचित्रच्छत्रसुच्छायं राज्यं नान्यत्र नीरिपु ॥११॥
काशीवासी च्युतक्लेशः पुष्करोपि
श्रेष्ठो राजन् मुक्तिकन्यादृतो यत्।
अन्यत्र स्यः सार्व्वभौमः स्वधर्मा
न स्याच्छ्रेयान् गर्भवासैकयोग्यः ॥१२॥
जडेषु सर्व्वेष्वपि मज्जमानेष्व्
इयं चिदानन्दमयी न मज्जति।
स्वयं निमग्ना कथमुद्धरेत्परान्
लोके च वेदे च विचार्य्यमेतत् ॥१३॥
सर्व्ववाङ्मनसातीतं भावाभावविवर्जितं।
चिन्मात्रं यत्परं ब्रह्म पञ्चक्रोशात्मकं हि तत् ॥१४॥

तदेतत्क्षेत्रमापूर्य्य स्थितं सर्व्वगमप्यहो।
अनुग्रहार्थं लोकानामिति वेदविदो विदुः ॥१५॥
शम्भोः शक्तिरियं काशी तदभिन्ना परा चितिः।
शिवएव हि जानाति काशिकायाः परं सुखं ॥१६॥
शिवस्यापि परं सौख्यं काशिका वेत्ति तत्परा।
निर्व्विशेषा च शुद्धा च जडा सेति त्रिधा मता ॥१७॥
क्षेत्ररूपा जडा काशी मोचयेत्सर्व्वदेहिनः।
मूर्त्तिरूपा तु या काशी शुद्धा सा चिन्मयी सती ॥१८॥
पूर्णरूपा स्वमाहात्म्यं स्वयमेव विचारयेत्।
निर्व्विशेषा तु मुक्तानां शिवस्य च परा गतिः ॥१९॥
कोटिजन्मसहस्रेषु तपोध्यानसमाधिभिः।
प्रसादितो शिवो येन स एवं वेत्ति काशिकां ॥२०॥
यस्याः प्रसादादहमेव शम्भुर्
जानामि शम्भुं सकलात्मभूतम्।
स्मरामि शम्भुं प्रणवं शिवञ्च
शिवप्रियां तां प्रणमामि काशीम् ॥२१॥
प्रकाशयेत् याशु परात्मतत्त्वं
प्रकाशतेऽस्यामिति वाथ काशी।
चिन्मात्ररूपापि च गीयते या
तां ब्रह्मविद्यां प्रणमामि काशीम् ॥२२॥
यस्यां वसन् जन्तुरुपैति धर्मं
मुक्तिं च विश्वेश्वरमार्य्यसङ्गम्।

गङ्गां सुविद्यां परमाङ्गतिञ्च
सा काशिका मेऽस्तु गतिर्मुमुक्षोः ॥२३॥
सर्वाणि तीर्थानि वसन्ति यस्यां
वेदाः सदेवा मुनयश्च मुक्त्यै ।
विभूषिता या परया स्वनद्या
सा काशिका मेऽस्तु गतिर्मुमुक्षोः ॥२४॥
शवः शिवः स्यादशिवोऽपि यस्याम्
अभद्रमुक्तं मरणञ्च भद्रम् ।
दरिद्रमपि श्रीपतितुल्य आस्ते
तां काशिकां को न भजेत्सुबुद्धिः ॥२५॥
विरक्तियोगादिभवा हि विद्या
सुदुर्लभा नास्ति कलौ विमुक्तिः ।
यस्यां त्वतस्तां समुपैति जन्तुः
शिवप्रसादादिति निश्चितं हि ॥२६॥
अतः सदा सैव निषेवितव्या
मुमुक्षुभिः शङ्कर राजधानी ।
स्वधर्मनिष्ठैः कलिकाल एका
ध्येया च वन्द्या परिकीर्त्तनीया ॥२७॥
ये पुण्यशीलाः परिकीर्त्तयन्ति
काशीं सदैव प्रणमन्ति भक्त्या ।
तेषामहस्मादरजो विमर्शि
शोचामि नित्यं दयया तदन्यान् ॥२८॥

वसन्ति पापा नहि काशिकायां
वसन्ति चेदत्र रतिर्न जायते।
रतिर्भवेच्चेन्नहि यातनाक्षयस्
तथापि चान्ते परिमुच्यतेऽसौ ॥२९॥
आदौ काश्यां धर्ममार्गेण वासः
पापत्यागः काशिमाहात्म्यदृष्टिः।
देहक्लेशं पुत्रमित्रादि यस्य
सर्वं तुच्छं सोऽधिकारी महात्मा ॥३०॥
वासः काश्यां सज्जनानां प्रसङ्गो
गङ्गास्नानं पापकर्मारुचिश्च।
पुण्ये प्रीतिः स्वेच्छया लाभसौख्यं
दानं शक्त्या न प्रतिग्राह्यमन्नम् ॥३१॥
अष्टावेते यस्य सन्त्येव योगा
योगाभ्यासैस्तस्य किङ्काशिकायाम्।
एवं ज्ञात्वा यो वसेत् काशिकायां
सद्यो मुक्तोऽसौ भवेन्नैव चान्यः ॥३२॥
काश्यां कृतातिपापस्य दारुणा रुद्रयातना।
अहो रुद्रपिशाचत्वं नरकेभ्योऽपि दुःसहम् ॥३३॥
तस्मात्पापं न कर्त्तव्यं मनागपि विभोः पुरे।
जातं यत्तत्प्रमादेन प्रायश्चित्तेन नश्यति ॥३४॥
स्थापनं शिवलिङ्गादेः पञ्चक्रोशप्रदक्षिणा।
ध्यानं दानं दया खेदः प्रायश्चित्तं महत्स्मृतम् ॥३५॥

पापमेवहि कर्त्तव्यं मतिरस्ति यदीदृशी ।
सुखेनान्यत्र कर्त्तव्यं महीह्यस्ति महीयसी ॥३६॥
यथा कामातुरो जन्तुरेकां रचति मातरम् ।
तथा पापकृता काशी रक्षितव्या मुमुक्षुणा ॥३७॥
काश्यां मृतानां मुक्तिः स्यान्नवेति विवदन्ति ये ।
नरकं यान्ति ते पापाः काका गृध्रा भवन्त्यथ ॥३८॥
तस्मात्सर्वं परित्यज्य श्रोतव्याः काशिसत्कथा ।
न विना श्रवणात्पुण्यं पापं वा वेत्ति कोपि हि ॥३९॥
काश्यां वासः सतां सङ्गो गङ्गाम्भः शिवपूजनम् ।
ध्यानं नारायणस्यैतत्सारात्सारं विदुर्बुधाः ॥४०॥
कलौ विश्वेश्वरो देवः कलौ वाराणसीपुरी ।
कलौ भागीरथी गङ्गा दानङ्कलियुगे महत् ॥४०॥
गङ्गा विश्वेश्वरः काशी जागर्त्ति त्रितयं यतः ।
तत्र नैश्रेयसी लक्ष्मीर्लभ्यते चित्रमत्र किम् ॥४२॥
न विश्वेशसमं लिङ्गं न काशी सदृशी पुरी ।
मणिकर्णिसमं तीर्थं नास्ति ब्रह्माण्डगोलके ॥४३॥
काश्यां लिङ्गान्यनेकानि काश्यां तीर्थान्यनेकशः ।
तथापि सेव्यो विश्वेशः स्नातव्या मणिकर्णिका ॥४४॥
यथा भूमितले विप्र पूर्यः सन्ति सहस्रशः ।
तथाकाशी न मन्तव्या कापिलोकोत्तरात्वियम् ॥४५॥
अन्यानि मुक्तिक्षेत्राणि काशीप्राप्तिकराणि हि ।
काशीं प्राप्य विमुच्येत नान्यथा तीर्थकोटिभिः ॥४६॥

तीर्थार्थं न वहिर्गच्छेद्देवार्थं वा कदाचन ।
सर्वतीर्थानि देवाश्च वसन्त्यत्राविमुक्तके ॥४७॥
शशतैर् मखकैः काश्यां यत्पदं हेलयाप्यते ।
तत्पदं नाप्यतेन्यत्र योगयुक्त्यापि योगिभिः ॥४८॥
मध्यमेश्वरमारभ्य यावद्देहलिविघ्नपम् ।
सूत्रं संस्थाप्यतद्दिक्षु भ्रामयेन्मण्डलाकृति ॥४६॥
तत्र या जायते रेखा तन्मध्ये क्षेत्रमुत्तमम् ।
काशीति यद्विदुर्वेदास्तत्र मुक्तिः प्रतिष्ठिता ॥५०॥
पूर्वतोजाह्नवी पश्चात्पाशपाणिर्गणेश्वरः ।
असीवरणयोर्मध्ये शुभा वाराणसीमता ॥५१॥
विश्वेश्वराच्चतुर्दिक्षु धनुःशतं युगोन्मितम् ।
अविमुक्तमितिप्रोक्तमन्तर्गृह मथ शृणु ॥५२॥
गोकर्णेशः पश्चिमे पूर्वतश्च गङ्गामध्यश्चोत्तरे भूरिभूतः।
ब्रह्मेशानो दक्षिणे संप्रदिष्टस् तत्तुप्रोक्तं भवनंविश्वभर्तुः
इत्थं चतुर्विधं क्षेत्रं प्रशस्तञ्चोत्तरोत्तरम् ।
पञ्चक्रोशात्मकं लिङ्गं यो वेद स परः शिवः ॥५४॥
य इदं काशिकास्तोत्रं भक्त्यासङ्कीर्त्तयेत्सदा ।
स सर्वपापनिर्मुक्तः सद्योमोक्षमवाप्नुयात् ।
गुणानामेकदेशोयं काशिकायाः प्रकीर्त्तितः ।
तेनप्रीणातुभगवान् विश्वेशः काशिकाप्रियः ॥५६॥
इति श्रीपरमहंसपरिव्राजकाचार्य श्रीसत्यज्ञानानन्द
तीर्थयति विरचितं काशिकास्तोत्रं समाप्तम् ।



अस्थिवद् दधिवच्चैव शङ्खवद्बकवत्तथा ।
राजन् तव यशो भाति पुनः संन्यासिदन्तवत् ॥१॥
कालिदास इमं श्लोकं स्वकवित्वस्य गोपकम् ।
लिखित्वा प्रददौ पत्रं कवये शङ्कराय वै ॥२॥
पठित्वा शङ्करः श्लोकं प्रहसन् कौतुकाय तत् ।
पत्रं करे समादाय सानन्दस्त्वरया तदा ॥३॥
कालिदासेन सहितो भोजराजसभां ययौ ।
अथ दृष्ट्वा स राजानमाशिषं प्रजगाद ह ॥४॥



राजन् अभ्युदयस्तु शङ्करकवे किं पत्रिकायामिदं
पद्यं कस्य तवैव कीर्त्तिरचना तत्प्रत्यतां पटते ।
किन्त्वासामरविन्दसुन्दरदृशां द्राक् चामरान्दोलनाद्
उद्वेल्लद्भुजवल्लीकङ्कणझनत्कारः क्षणं वार्यताम् ॥५॥
महाराज श्रीमन् जगति यशसा ते धवलिते
पयः पारावारं परमपुरुषोयं मृगयते ।
कपर्दी कैलाशं करिवरमथोयं कुलिशभृत्
कलानाथं राहुः कमलभवनो हंसमधुना ॥६॥

नीरक्षीरे गृहीत्वा सकलखगपतीन्याति नालैकजन्मा
तक्रं धृत्वा कराजे सकलजलनिधीन् चक्रपाणिर्मुकुन्दः।
सर्वानुद्धृत्य शैलान्दहति पशुपतिर्भाल नेत्रेण पश्यन्
व्याप्ता त्वत्कीर्त्तिकान्ता सकलवसुमतीं भोजराजक्षितीन्द्र
श्रीमद्राजशिखामणे तुलयितुं धाता त्वदीयं यशः
कैलाशञ्च निरीक्ष्य तत्र लघुतां तत्पूर्त्तये पर्यधात् ।
उक्षाणं तदुपर्युमासहचरं तन्मूर्ध्नि गङ्गाम्भरं
तस्याग्रे फणिपुङ्गवं तदुपरि स्फारं सुधादीधितीं ॥८॥
अबाधि मुनिना पुरा पुनरमाथि मर्य्यादया
अतारि कपिना पुरा पुनरदाहि लङ्कारिणा ।
अमन्थि सुरवैरिणा पुनरबन्धि लङ्कारिणा
क नाम वसुधापते तव यशोम्बुधिः क्वाम्बुधिः ॥९॥
स्वस्ति श्रीभोजराज त्रिभुवनविजयी धार्मिकः सत्यवादी
पित्रा ते मे गृहीता नवनवतियुता रत्नकोटिर्मदीया।
तां त्वं मे देहि शीघ्रं सकलबुधजनैर्ज्ञायते सत्यमेतत्
त्वा जानन्ति केचिन्नवकृतमिति चेद्देहि लक्षं ततो मे
गाः प्रत्युपकारकातरधिया वैमुख्यमाकर्णमे [॥१०॥
कर्णाटवसुन्धराधिपसुधासिक्तानि सूक्तानिम ।
र्यन्ते कति नाम नार्णवनदीभूगोलविन्ध्याटवी
स्कामाकृतचन्द्रमः प्रभृतयस्तेभ्यः किमाप्तं मया ॥११॥
ति श्रीमहाकवि कालिदासकृतं महापद्मषट्कं
समाप्तम् ।

## साधनपञ्चकम् ।

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयता मपचितिः कामे मतिस्त्यज्यतां
पापौघः परिधूयतां भवसुखे दोषोऽनुसन्धीयताम्
आत्मेच्छाव्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यतां ॥१॥
सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढा धीयतां
शान्त्यादिः परिचीयतां दृढतरं कर्माशु संत्यज्यतां ।
सद्विद्वाह्युपसर्प्यतां प्रतिदिनं तत्पादुका सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यतां॥२॥
वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां
दुस्तर्कात् सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयतां ।
ब्रह्मैवास्मि विभाव्यतामहरहर्गर्व परित्यज्यतां
देहेऽहम्मतिरुज्झ्यतां बुधजनैर्वादः परित्यज्यतां ॥३॥
क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां
स्वाद्वन्नं न तु याच्यतां विधिवशात् प्राप्तेन सन्तुष्यतां ।
शीतोष्णादि विषह्यतां न तु वृथावाक्यं समुच्चार्यताम्
औदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यतां ॥४॥

एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यतां ।
प्राक्कर्मप्रतिलोप्यतां चितिबलान्नाप्युत्तरे श्लिष्यतां
प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयतां ॥५॥
यः श्लोकपञ्चकमिदं पठते मनुष्यः
सञ्चिन्तयत्यनुदिनं स्थिरतामुपेत्य ।
तस्याशु संसृतिदवानलतीव्रघोर
तापः प्रशान्तिमुपयाति चितिप्रसादात् ॥६॥

इति श्रीशङ्कराचार्य्यविरचितं साधनपञ्चकं समाप्तम् ॥

## यतिपञ्चकम् ।

वेदान्तवाक्येषु सदा रमन्तो
भिक्षान्नमात्रेण च तुष्टिमन्तः ।
विशोकमन्तःकरणे रमन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥१॥
मूलं तरोः केवलमाश्रयन्तः
पाणिद्वयं भोक्तुममन्त्रयन्तः ।

कन्थामिव श्रीमपि कुत्सयन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥२॥
देहादिभावं परिवर्त्तयन्तः
आत्मानमात्मन्यवलोकयन्तः।
नान्तं न मध्यं न वहिः स्मरन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥३॥
स्वानन्दभावे परितुष्टिमन्तः
सुशान्तसर्वेन्द्रियतुष्टिमन्तः।
अहर्निशं ब्रह्मसुखे रमन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥४॥
पञ्चाक्षरं पावनमुच्चरन्तः
पतिं पशूनां हृदि भावयन्तः।
भिक्षाशिनो दिक्षु परिभ्रमन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥५॥

इति श्रीपरमहंसकाचार्य्य शङ्करभगवत्
पूज्यपादकृतं यतिपञ्चकं
समाप्तम् ॥

तपोभिः क्षीणपापानां शान्तानां वीतरागिणां ।
मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते ॥१॥
बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनं ।
पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिध्यति ॥२॥
अविरोधितया कर्म नाविद्यां विनिवर्त्तयेत् ।
विद्याविद्यां निहन्त्येव तेजस्तिमिरसंघवत् ॥३॥
परिच्छिन्न इवाज्ञानात्तन्नाशे सति केवलः ।
स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ॥४॥
अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्विनिर्मलं ।
कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥५॥
संसारः स्वप्नतुल्योहि रागद्वेषादिसङ्कुलः ।
स्वकाले सत्यवद्भाति प्रबोधेऽसत्यवद्भवेत् ॥६॥
तावत्सत्यं जगद्भाति शुक्तिकारजतं तथा ।
यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयं ॥७॥
सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पितः ।
व्यक्तयो विविधाः सर्वा हाटके कटकादिवत् ॥८॥
यथाकाशो हृषीकेशो नानोपाधिगतो विभुः ।
तद्भेदाद्भिन्नवद्भाति तन्नाशादेकवद्भवेत् ॥९॥

नानोपाधिवशादेवं जातिनामाश्रयादयः।
आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥१०॥
पञ्चीकृतमहाभूतसम्भवं कर्मसञ्चितं।
शरीरं सुखदुःखानां भोगायतनमुच्यते ॥११॥
पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितं।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनं ॥१२॥
अनाद्यविद्या निर्वाच्या कारणोपाधिरुच्यते।
उपाधित्रितयादन्यमात्मानमवधारयेत् ॥१३॥
पञ्चकोशादियोगेन तत्तन्मयइव स्थितः।
शुद्धात्मा नीलवस्त्रादियोगेन स्फटिको यथा ॥१४॥
वपुस्तुषादिभिः कोशैर्युक्तं युक्त्यावघाततः।
आत्मानमान्तरं शुद्धं विविच्यात्तण्डुलं यथा ॥१५॥
सदा सर्वगतोप्यात्मा न सर्वत्रावभासते।
बुद्धावेवावभासेत स्वच्छेषु प्रतिबिम्बवत् ॥१६॥
देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणं।
तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा ॥१७॥
व्यापृत्तेष्विन्द्रियेष्वात्मा व्यापारीवाविवेकिनां।
दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी ॥१८॥
आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः।
स्वकीयार्थेषु वर्त्तन्ते सूर्य्यालोकं यथा जनाः ॥१९॥
देहेन्द्रियगुणान् कर्माण्यमले सच्चिदात्मनि।
अध्यस्यतेऽविवेकेन गगने नीलतादिवत् ॥२०॥

अज्ञानान्मानसोपाधेः कर्तृत्वादीनि चात्मनि।
कल्प्यन्तेऽम्बुगते चन्द्रे चलनादिर् यथाम्भसः॥२१॥
रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्त्तते।
सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः॥२२॥
प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर् यथोष्णता।
स्वभावः सच्चिदानन्दनित्यनिर्मलतात्मनः॥२३॥
आत्मनः सच्चिदंशश्च बुद्धेर्वृत्तिरिति द्वयं।
संयोज्य चाविवेकेन जानामीति प्रवर्त्तते॥२४॥
आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति।
जीवः सर्वमलं ज्ञात्वा ज्ञाता द्रष्टेति मुह्यति॥२५॥
रज्जुसर्पवदात्मानं जीवो ज्ञात्वा भयं वहेत्।
नाहञ्जीवः परात्मेति ज्ञातश्चेन्निर्भयो भवेत्॥२६॥
आत्मावभासयत्येको बुद्ध्यादीनीन्द्रियाणि हि।
दीपो यथा घटादिवत्स्वात्मा जडैस्तैर्नावभास्यते॥२७॥
स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः।
न दीपस्यान्यदीपेच्छा यथा स्वात्मप्रकाशने॥२८॥
निषिध्य निखिलोपाधीन्नेति नेतीति वाक्यतः।
विद्यादैक्यं महावाक्यैर् जीवात्मपरमात्मनोः॥२९॥
आविद्यकं शरीरादि दृश्यं बुद्बुदवत् क्षरं।
एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्मलं॥३०॥
देहान्यत्वान्नमे जन्मजराकार्श्यलयादयः।
शब्दादिविषयैः सङ्गो निरिन्द्रियतया न च॥३१॥

अमनस्त्वान्नमे दुःखरागद्वेषभयादयः ।
अप्राणो ह्यमनाः शुभ्र इत्यादि श्रुतिशासनात् ॥३२॥
निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः ।
निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥३३॥
अहमाकाशवत्सर्वं बहिरन्तर्गतोऽच्युतः ।
सदा सर्वसमः शुद्धो निःसङ्गो निर्मलोऽचलः ॥३४॥
नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयं ।
सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥३५॥
एवं निरन्तरं कृत्वा ब्रह्मैवास्मीति वासना ।
हरत्यविद्याविक्षेपान् रोगानिव रसायनं ॥३६॥
विविक्तदेश आसीनो विरागो विजितेन्द्रियः ।
भावयेदेकमात्मानं तमनन्तमनन्यधीः ॥३७॥
आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया सुधीः ।
भावयेदेकमात्मानं निर्मलाकाशवत्सदा ॥३८॥
रूपवर्णादिकं सर्वं विहाय परमार्थवित् ।
परिपूर्णचिदानन्दस्वरूपेणावतिष्ठति ॥३९॥
ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते ।
चिदानन्दैकरूपत्वाद्दीप्यते स्वयमेव हि ॥४०॥
एवमात्मारणौ ध्यानमथने सततं कृते ।
उदितावगतिर्ज्वाला सर्वाज्ञानेन्धनं दहेत् ॥४१॥
अरुणेनैव बोधेन पूर्वं सततमसे हृते ।
तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥४२॥

आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया ।
तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा ॥४३॥
स्थाणौ पुरुषवद्भ्रांत्या कृता ब्रह्मणि जीवता ।
जीवस्य तात्त्विके रूपे तस्मिन् दृष्टे निवर्त्तते ॥४४॥
तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमञ्जसा ।
अहं ममेति चाज्ञानं बाधते दिग्भ्रमादिवत् ॥४५॥
सम्यग्विज्ञानवान्योगी स्वात्मन्येवाखिलञ्जगत् ।
एकं च सर्वमात्मानमीक्षते ज्ञानचक्षुषा ॥४६॥
आत्मैवेदं जगत्सर्वमात्मनोऽन्यन् न किञ्चन ।
मृदो यद्वद् घटादीनि स्वात्मानं सर्वमीक्षते ॥४७॥
जीवन्मुक्तिस्तु तद्विद्वान् पूर्वोपाधिगुणांस्त्यजेत् ।
सच्चिदानन्दरूपत्वाद्भजेद्भ्रमरकीटवत् ॥४८॥
तीर्त्वा मोहार्णवं हत्वा रागद्वेषादिराक्षसान् ।
योगी सर्वसमायुक्त आत्मारामो विराजते ॥४९॥
वाह्यानित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः ।
घटस्थदीपवत् स्वच्छन्दन्तरेव प्रकाशते ॥५०॥
उपाधिस्थोऽपि तद्धर्मैर्निर्लिप्तो व्योमवन्मुनिः ।
सर्वविन्मूढवत्तिष्ठेदसक्तः वायुवच्चरेत् ॥५१॥
उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः ।
जले जलं वियद् व्योम्नि तेजस्तेजसि वा यथा ॥५२॥
यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखं ।
यज्ज्ञानान्नापरं ज्ञानं यद्ब्रह्मेत्यवधारयेत् ॥५३॥

यद्दृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः ।
यज्ज्ञात्वा नापरं ज्ञेयं तद् ब्रह्मेत्यवधारयेत् ॥५४॥
तिर्यगूर्ध्वमधःपूर्णं सच्चिदानन्दमद्वयं ।
अनन्तं नित्यमेकं यत् तद् ब्रह्मेत्यवधारयेत् ॥५५॥
अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽद्वयं ।
अखण्डानन्दमेकं यत् तद् ब्रह्मेत्यवधारयेत् ॥५६॥
अखण्डानन्दरूपस्य तस्यानन्दलवाश्रिताः ।
ब्रह्माद्यास्तारतम्येन भवन्त्यानन्दिनो लवाः ॥५७॥
तद्युक्तमखिलं वस्तु व्यवहारस्तदन्वितः ।
तस्मात्सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले ॥५८॥
अनण्वस्थूलमह्रस्वमदीर्घमजमव्ययं ।
अरूपगुणवर्णाख्यं तद् ब्रह्मेत्यवधारयेत् ॥५९॥
यद्भासा भास्यतेऽर्कादिर् भास्यैर्यत्तु न भास्यते ।
येन सर्वमिदं भाति तद् ब्रह्मेत्यवधारयेत् ॥६०॥
स्वयमन्तर्बहिर्व्याप्य भासयेन्निखिलं जगत् ।
ब्रह्म प्रकाशते वह्निप्रतप्तायसपिण्डवत् ॥६१॥
जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन् न किञ्चन ।
ब्रह्मान्यद्भासते मिथ्या यथा मरुमरीचिका ॥६२॥
दृश्यते श्रूयते यद्यद् ब्रह्मणोऽन्यन्न विद्यते ।
तत्त्वज्ञानाच्च तद् ब्रह्म सच्चिदानन्दमद्वयं ॥६३॥
सर्वगं सच्चिदात्मानं ज्ञानचक्षुर् निरीक्ष्यते ।
अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥६४॥

श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरितापितः।
जीवः सर्वमलान्मुक्तः स्वर्णवद्द्योतते स्वयम् ॥६५॥
हृदाकाशोदितो ह्यात्मा बोधभानुस्तमोपहृत्।
सर्वव्यापी सर्वधारी भाति सर्वं प्रकाशते ॥६६॥
दिग्देशकालाद्यनपेक्ष्य सर्वगं
शीतादिहृन्नित्यसुखं निरञ्जनम्।
यः स्वात्मतीर्थं भजते विनिष्क्रियः
स सर्ववित्सर्वगतोऽमृतो भवेत् ॥६७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्य श्रीमच्छङ्कराचार्य्य विरचितमात्मबोधप्रकरणं समाप्तम्।

## अपराधभञ्जनस्तोत्रम्।

शान्तं पद्मासनस्थं शशधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं।
शूलं वज्रञ्च खड्गं परशुमपि वरं दक्षिणाङ्गे वहन्तं ॥
नागं पाशञ्च घण्टां डमरुकसहितं चाङ्कुशं वामभागे।
नानालङ्कारदीप्तं स्फटिकमणिनिभं पार्वतीशं भजामि
वन्दे देवमुमापतिं सुरगुरुं वन्दे जगत्कारणं
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम्।

वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियं
वन्दे भक्तजनाश्रयञ्च वरदं वन्दे शिवं शङ्करम् ॥२॥
आदौ कर्मप्रसङ्गात् कलयति कलुषं
मातृकुक्षौ स्थितः सन् ।
विन्मूत्रामेध्य मध्ये व्यथयति नितरां
जाठरो जातिवेदाः ॥
यद्यद्वा तव दुःखं विषयति विषमं
शक्यते केन वक्तुम् ।
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः
श्रीमहादेव शम्भो ॥३॥
बाल्ये दुःखातिरेको मललुलितवपुः
स्तन्यपाने पिपासा
न शक्यं चेन्द्रियेभ्यो भवगुणजनिता
जन्तवो मां तुदन्ति ॥
नानारोगोत्थदुःखादुदरपरिवशः
शङ्करं न स्मरामि ।
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः
श्रीमहादेव शम्भो ॥४॥
प्रौढोऽहं यौवनस्थो विषयविषधरैः
पञ्चभिर्मर्मसन्धौ ।
दष्टो नष्टो विवेकः सुतधनयुवती
स्वादुसौख्ये निषण्णः ॥

यौवे चिन्ताविहीनं मम हृदयमहो
मान गर्वाधिरूढं ।
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः
श्रीमहादेव शम्भो ॥ ५ ॥
वार्द्धक्ये चेन्द्रियाणां विगतगतमतेर्
आधिदैवादितापैः ।
पापै रोगैर् वियोगैर् अग्रहशवपुषं
प्रौढहीनञ्च दीनम् ॥
मिथ्यामोहाभिलाषैर् भ्रमति मम मनो
धूर्जटेर्ध्यानशून्यम् ।
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः
श्रीमहादेव शम्भो ॥ ६ ॥
नो शक्यं स्मार्त्तकर्म प्रतिपदगहनं
प्रत्यवायाकुलाख्यम् ।
श्रौते वार्ता कथं मे द्विजकुलविहिते
ब्रह्ममार्गे च सारे ॥
नष्टो धर्मो विचारः श्रवणमननयोः
को निदिध्यासितव्यः ।
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः
श्रीमहादेव शम्भो ॥ ७ ॥
स्नात्वा प्रत्यूषकाले स्नपनविधिविधौ
नाहृतं गाङ्गतोयम् ।

पूजार्थं वा कदाचिद् बहुतरगहनात्
खण्डबिल्वैकपत्रम् ॥
नानीता पद्ममाला सरसि विकसिता
गन्धपुष्पे त्वदर्थम् ।
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः
श्रीमहादेव शम्भो ॥ ८ ॥
दुग्धैर्मध्वाज्ययुक्तैर्दधिसितसहितैः
स्नापितं नैव लिङ्गम् ।
नोलिप्तं चन्दनाद्यैः कनकविरचितैः
पूजितं न प्रसूनैः ॥
धूपैः कर्पूरदीपैर् विविध रसयुतैः
नैव भक्ष्योपहारैः ।
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः
श्रीमहादेव शम्भो ॥९॥
नग्नो निःसङ्गशुद्धस्त्रिगुणविरहितो
ध्वस्तमोहान्धकारो ।
नासाग्रे न्यस्तदृष्टिर् विदितभवगुणैर्
नैव दृष्टं कदाचित् ।
उन्मत्तयावस्थया त्वां विगतकलिमलं
शङ्करं न स्मरामि ।
क्षन्तव्यो मे ऽपराधः शिव शिव शिव भोः
श्रीमहादेव शम्भो ॥ १० ॥

ध्यानं चित्ते शिवाख्यं प्रचुरतरधनं
नैव दत्तं द्विजेभ्यो ।
हव्यं ते लक्षसंख्यं हुतवहवदने
नार्पितं बीजमन्त्रैः ॥
नो जप्तं गाङ्गतीरे व्रतपरिचरने
रुद्रजप्यैर् न वेदैः ।
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः
श्रीमहादेव शम्भो ॥ ११ ॥

स्थित्वा स्थाने सरोजे प्रणवमयमरुत्
कुम्भके सूक्ष्ममार्गे ।
शान्ते स्वान्ते प्रलीने प्रकटितगहने
ज्योतिरूपे पराख्ये ॥
लिङ्गं त्वद्ब्रह्मवाच्यं सकलमभिमतं
नैव दृष्टं कदाचित् ।
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः
श्रीमहादेव शम्भो ॥ १२ ॥

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं
प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ।
लक्ष्मीस्तोयतरङ्गभङ्गचपला विद्युच्चलं जीवनं
तस्मान्मां शरणागतं शरणद त्वं रक्ष रक्षाधुना ॥१३॥

चन्द्रोद्भासितशेखरे स्मरहरे गङ्गाधरे शङ्करे
सर्पैर्भूषित कण्ठकर्णविवरे नेत्रोत्थवैश्वानरे ।

दन्तित्वक्स्वतिसुन्दराम्बरधरे त्रैलोक्य सारे हरे
मोक्षार्थं कुरु चित्तवृत्तिममलामन्यैस्तु किं कर्म्मभिः॥१४
किं दानेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं
किम्वा पुत्रकलत्रमित्रपशुर्देहेन गेहेन किम्।
ज्ञात्वैतत् चणभङ्गुरं सपदि रे त्याज्यं मनोदूरतः
स्वात्मार्थं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभम्॥१५
करचरणकृतं वा कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वापराधम्।
विदितमविदितं वा सर्व्वमेतत् क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शम्भो॥१६॥
गात्रं भस्मसितं स्मितञ्च हसितं हस्ते कपालं सितं
खट्वाङ्गञ्च सितं सितश्च वृषभः कर्णे सिते कुण्डले।
गङ्गाफेनसितं जटा पयसितं चन्द्रः सितो मूर्द्धनि
सोऽयं सर्वसितो ददातु विभवं पापक्षयं शङ्करः॥१७॥

इति श्रीपरमहंसपरिव्राजकाचार्य्य श्रीशङ्करा-
चार्य्य भगवत्कृतमपराधभञ्जनस्तोत्रं
समाप्तम्॥

---

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
नित्यप्रगल्भवाचालामुपतिष्ठ सरस्वती ॥१॥
इतरपापफलानि यथेच्छया
वितर तानि सहे चतुरानन ।
अरसिकेषु कवित्वनिवेदनं
शिरसि मालिख मालिख मालिख ॥२॥
संसारविषवृक्षस्य द्वे फले अमृतोपमे ।
काव्यामृतरसास्वाद आलापः सज्जनैः सह ॥३॥
पण्डितेषु गुणाः सर्वे मूर्खे दोषाश्च केवलाः ।
तस्मान्मूर्खसहस्रेषु प्राज्ञ एको विशिष्यते ॥४॥
पुरो रेवापारे गिरिरतिदुरारोहशिखरो
धनुर्वाणैः पश्चात् शवरकवरो धावति खगं
सरः सव्येऽसव्ये दवदहनदाहव्यतिकरो ।
न गन्तुं न स्थातुं हरिणशिशुरेवं विलपति ॥५॥
छेदश्चन्दनचूतचम्पकवने रक्षा करीरद्रुमे
हिंसा हंसमयूरकोकिलकुले काकेषु लीलारतिः ।
मातङ्गेन खरक्रयः समतुला कर्पूरकार्पासयोर्
एषा यत्र विचारणा गुणिगणे देशाय तस्मै नमः ॥६॥

भिनत्ति भीमं करिराजकुम्भं विभर्त्ति वेगं पवनादतीव
करोतिवासं गिरिगह्वरेषुतथापिसिंहःपशुरेवनान्यः॥७
काकस्य चञ्चुर्यदिस्वर्णयुक्तामाणिक्ययुक्तौचरणौचतस्य
एकैकपक्षे गजराजमुक्ता तथापि काको नचराजहंसः
दिव्यं चूतरसं पीत्वा न गर्वं याति कोकिलः ।
पीत्वा कर्दमपानीयं भेको मकमकायते ॥९॥
भद्रं कृतं कृतं मौनं कोकिलैर्जलदागमे ।
दर्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम् ॥११॥
अगाधजलसञ्चारी न गर्वं याति रोहितः ।
अङ्गुष्ठोदकमात्रेण सफरी फर्फरायते ॥१०॥
मणिर्लुठति पादेषु काचः शिरसि धार्य्यते ।
यथैवास्ते तथैवास्तां काचः काचो मणिर्मणिः ।
काकः कृष्णः पिकः कृष्णःकोभेदः पिककाकयोः ।
वसन्ते समुपायाते काकः काकः पिकः पिकः ॥१३॥
वरं वनेव्याघ्रगजेन्द्रसेवितं द्रुमालयं पत्रफलाम्बुभोजनं।
तृणानि शय्या वसनंच वल्कलं न बन्धुमध्येधनहीनजी
साध्वीस्त्रीणां दयितमविरहेमानिनां मानभङ्गे[॥वनं॥१४
सल्लोकानामपि जनरवे निग्रहे पण्डितानां ।
अन्योद्रेके कुटिलमनसां निर्गुणानां विदेशे
भृत्याभावे भवति मरणं किन्तु;सम्भावितानां ॥१५॥

इति श्रीमहाकविवररुचिविरचितं
नीतिरत्नं सम्पूर्णम् ।



गिरौ कलापी गगने पयोदा
लक्षान्तरेऽर्कश्च जलेषु पद्मा:।
इन्दुर्द्विलक्षं कुमुदस्य बन्धुर्
यो यस्य मित्रं नहि तस्य दूरम् ॥१॥

माता निन्दति नाभिनन्दति पिता भ्राता न सम्भाषते
भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते
अर्थप्रार्थनशङ्कया न कुरुतेऽप्यालापमात्रं सुहृत्
तस्मादर्थमुपार्जयस्व च सखे स्वार्थस्य सर्वे वशाः ॥२॥

धनैर्निष्कुलीनाः कुलीना भवन्ति
धनैरापदं मानवा निस्तरन्ति।
धनेभ्यः परो बान्धवो नास्ति लोके
धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥३॥

अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्।
इति सत्यं महाराज बद्धोस्म्यर्थेन कौरवैः ॥४॥

त्रिविक्रमोऽभूदपि वामनोऽसौ
स शूकरश्चेति स वै नृसिंहः।
नीचैरनीचैरतिनीचनीचैः

सर्वैरुपायैः फलमेव साध्यम् ॥५॥
चलच्चित्तं चलद्वित्तं चलज्जीवनयौवनम्।
चलाचलमिदं सर्वं कीर्त्तिर्यस्य स जीवति ॥६॥
स जीवति यशो यस्य कीर्त्तिर्यस्य स जीवति
अयशोऽकीर्त्तिसंयुक्तो जीवन्नपि मृतोपमः ॥७॥
वृद्धस्य वचनं ग्राह्यमापत्काले ह्युपस्थिते।
सर्वत्रैव विचारेण नाहारे नच मैथुने ॥८॥
क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणे क्षणे।
अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः ॥९॥
निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति।
अकारणद्वेषि मनस्तु यस्य
कथं जनस्तं परितोषयिष्यति ॥१०॥
दृष्टा व्याघ्रा जिताः पूर्वं सप्तसिंहास्त्रयो गजाः।
पश्यन्तु देवताः सर्वा अद्य युद्धं त्वया मया ॥११॥
सिंहउवाच।
गच्छ शूकर भद्रन्ते ब्रूहि सिंहो मया जितः।
पण्डिता एव जानन्ति सिंहशूकरयोर्बलम् ॥१२॥
उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीम्
दैवेन देयमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥१३॥

एका भार्य्या प्रकृतिमुखरा चञ्चला च द्वितीया
पुत्रस्त्वेको भुवनविजयी मन्मथो दुर्निवारः ।
शेषः शय्या शयनमुदधौ वाहनं पन्नगारिः
स्मारं स्मारं स्वगृहचरितं दारुभूतो मुरारिः ॥१४॥

अतिदूरपथश्रान्ताश्छायां यान्ति च शीतलां ।
शीतलाश्च पुनर्यान्ति का कस्य परिवेदना ॥१५॥

अपमानं पुरस्कृत्य मानं कृत्वा च पृष्ठके ।
स्वकार्य्यमुद्धरेत् प्राज्ञः कार्य्यध्वंसोहि मूर्खता ॥१६॥

एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोरिति योऽवभाषे ।
नूनं न दृष्टं कविनापि तेन
दारिद्र्यदोषो गुणराशिनाशी ॥१७॥

कृतस्य करणं नास्ति मृतस्य मरणं तथा ।
गतस्य शोचना नास्ति ह्येतद्वेदविदाम्मतम् ॥१८॥

नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि ।
कुशकण्टकविद्धोपि प्राप्तकालो न जीवति ॥१९॥

निमग्नस्य पयोराशौ पर्व्वतात् पतितस्य च ।
तक्षकेनापि दष्टस्य आयुर्मर्माणि रक्षति ॥२०॥

करोतु नाम नीतिज्ञो व्यवसायमितस्ततः ।
फलं पुनस्तदेवस्याद् यद्विधेर्मनसि स्थितम् ॥२१॥

इति श्रीमहाकविघटकर्परविरचितं
नीतिसारं समाप्तम् ॥



श्रद्धाबीजो विप्रवेदाम्बुसिक्तः
शाखा विद्यास्तास्वतस्त्वो दयापि ।
पुण्यान्यर्थौ द्वे फले स्थूलसूक्ष्मे
मोक्षः कामो धर्मवृक्षोऽयमीड्यः ॥१॥
यातः क्ष्मामखिलां प्रदाय हरये पातालमूलं बलिः
शक्रप्रस्थविसर्जनात् स च मुनिः स्वर्गं समारोपितः ।
आबाल्यादसती सती सुरपुरीं कुन्ती समारोहयत्
हा सीता पतिदेवतागमदधो धर्मस्य सूक्ष्मा गतिः ॥२॥
कानीनस्य मुनेः स्वबान्धववधूवैधव्यविध्वंसिनो
नेत्तारः खलु गोलकस्य तनयाः कुण्डाः स्वयं पाण्डवाः
तेऽमी पञ्च समानयोनिरतयः तेषां गुणोत्कीर्त्तनात्
अक्षय्यं सुकृतं भवेदविकलं धर्मस्य सूक्ष्मा गतिः ॥३॥
आहारे शुचिता ध्वनौ मधुरता नीडे पराधीनता
बन्धौ निर्ममता वने रसिकता वाचालता माधवे ।
यस्यैते गुणराशयः पिकवरं त्यक्त्वा किमेते जना
वन्दन्ते खलुखञ्जनं कृतिभुजं चित्रागतिः कर्मणां ॥४॥
कान्तं वक्ति कपोतिकाकुलतया नाथान्तकालोऽधुना
व्याधोऽधो धृतचापसज्जितशरः श्येनः परिभ्राम्यति ।

इत्थं सत्यहीना स दृष्ट इषुणा श्येनोपि तेनाहतस्
तूर्णं तौ तु यमालयम्प्रति गतौ दैवी विचित्रा गतिः ॥५॥
शुण्डीगेण्डुरयोर्विचार्य्य मनसा कल्काग्रनं यन्मया
प्रोक्तं तद्विपरीतकं कृतमहो गोःखूरमालं ददौ ।
नार्थो मूर्खजनालये न च सुखं नोवा यशो लभ्यते
सद्दैद्यो कपिभूपतौ हरिहरे लाभः परं गोवधः ॥६॥
पञ्चास्यस्य पराभवाय भषको मांसेन गोर्भूयसा
दध्यन्नैरपि पायसैः प्रतिदिनं सम्वर्द्धितो यो मया ।
सोयं सिंहरवाद्गुहान्तरगमद्भीत्याकुलः संभ्रमाद्
हन्ताशा विलयं गता हतविधेर्लाभः परं गोवधः ॥७॥
पारीन्द्रस्य पराभवाय सुरभीमांसेन दुर्मेधसा
पुष्यन्ते किल पीवराः कटुगिरः श्वानः प्रयत्नादमी ।
नत्वेतन्मदमत्तवारणचमूविद्रावणः केशरी
जेतव्यो भवता किरातनृपते लाभः परं गोवधः ॥८॥
एका भूरुभयोरैक्यमुभयोर्दलकाण्डयोः ।
शालिश्यामाकयोर्भेदः फलेन परिचीयते ॥९॥
जातः सूर्य्यकुले पिता दशरथः क्षौणीभुजामग्रणीः
सीता सत्यपरायणा प्रणयिणी यस्यानुजो लक्ष्मणः ।
दोर्दण्डेन समो नचास्ति भुवने प्रत्यक्षविष्णुः स्वयं
रामो येन विडम्बितोपि विधिना चान्ये परे काकथा॥
एका भार्य्या प्रकृतिमुखरा चञ्चला च द्वितीया
पुत्रस्त्वेको भवनविजयी मन्मथो दुर्निवारः ।

शेषः शय्या शयनसुहृदौ वाहनं पन्नगारिः
स्मारं स्मारं स्वगृहचरितं दारुभूतो मुरारिः ॥११॥
असारे खलु संसारे सारं श्वशुरमन्दिरं ।
हरो हिमालये शेते विष्णुः शेते महोदधौ ॥१२॥
असारे खलु संसारे सारमेतच्चतुष्टयं
काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भुसेवनं ॥१३॥
आपदर्थं धनं रक्षेद्दारान् रक्षेत् धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥१४॥
चिन्ता ज्वरो मनुष्याणां वस्त्राणामातपो ज्वरः ।
असौभाग्यं ज्वरः स्त्रीणामश्वानां मैथुनं ज्वरः ॥१५॥
यदि कृष्णपदे चिन्ता भक्तिस्तत्पदपङ्कजे ।
विषमे दुर्गमे वापि का चिन्ता मरणे रणे ॥१६॥
देवे तीर्थे द्विजे मन्त्रे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥१७॥
न माता शपते पुत्रं न दोषं लभते मही ।
न हिंसां कुरुते साधुर् न देवः सृष्टिनाशकः ॥१८॥
जल्पन्ति सूरयः सर्वे धर्मो रक्षति धार्मिकं ।
एतज्ज्ञातव्यमद्यैव किमत्र च भविष्यति ॥१९॥
जयोस्तु पाण्डुपुत्राणां येषां पक्षे जनार्दनः ।
यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ॥२०॥

इति श्रीमहाकविहलायुधविरचितं
धर्मविवेकवाक्यं समाप्तम् ॥

# शृङ्गाररसाष्टकम् ।



अविदितसुखदुःखं निर्गुणं वस्तु किञ्चित्
जडमतिरिह कश्चित् मोक्ष इत्याचचक्षे ।
मम तु मतमनङ्गस्मेरतारल्यघूर्णन्
मदकलमदिराक्षीणीविमोक्षो हि मोक्षः ॥१॥

कदा कान्तागारे परिमलमिलत्पुष्पशयने
शयानः कान्तायाः कुचयुगमहं वक्षसि वहन् ।
अये कान्ते मुग्धे कुटिलनयने चन्द्रवदने
प्रसीदेति क्रोशन् निमीषमेव नेष्यामि दिवसान् ॥२॥

सायं नायमुदेति वासरमणिश्चन्द्रो न चण्डद्युतिर्
दावाग्निः कथमम्बरे किमशनि स्वच्छान्तरीक्षे स्थितः।
हन्तेदं निरणायि पान्थरमणीप्राणानिलाशाशया
धावद्घोरविभावरी विषधरी भोगस्य भीमो मणिः ॥३॥

आयाति याति पुनरेव जलं प्रयाति
पद्माङ्कुराणि विधुनोति धुनोति पक्षौ
उन्मत्तवद्भ्रमति कूजति मन्दमन्दं
कान्तावियोगविधुरो निशि चक्रवाकः ॥४॥

ंक्वा मोक्तुं न भुंक्ते कुटिलविसलता
ग्राडमिन्दोर्वितर्कात् ।

तारकाकारास्तृषार्त्तो न पिबति पयसां
विप्रुषः पत्रसंस्थाः ।
छायामम्भोजिनीनामलिकुलसबलां
वीक्ष्य सन्ध्यामसन्ध्याम् ।
कान्ताविश्लेषभीरुर्दिनमपि रजनीं
मन्यते चक्रवाकः ॥५॥

गन्धाढ्यासौ भुवनविदिता केतकी स्वर्णवर्णा
पद्मभ्रान्त्या चपलमधुपः पुष्पमध्ये पपात ।
अन्धीभूतः कुसुमरजसा कण्टकैर्लूनपक्षः
स्थातुं गन्तुं द्वयमपि सखे नैव शक्तो द्विरेफः ॥६॥

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्
निक्षेपएव पदमुद्धृतमर्पयन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥७॥

का कावला निधुवनश्रमपीडिताङ्गी
निद्रां गता दयितबाहुलतानुबद्धा ।
सा सा तु यातु भवनं मिहिरोद्गमोयं
सङ्केतवाक्यमिति काकचया वदन्ति ॥८॥

इति महामहाकविकालिदासविरचितं
शृङ्गाररसाष्टकं समाप्तम् ।

पशूनां पतिं पापनाशं परेशं
गजेन्द्रस्य कृत्तिं वसानं वरेण्यं ।
जटाजूटमध्येस्फुरद्गाङ्गवारिं
महादेवमेकं स्मरामि स्मरारिं ॥१॥
महेशं सुरेशं सुरारातिनाशं
विभुं विश्वनाथं विभूत्यङ्गभूषं ।
विरूपाक्षमिन्द्वर्कवह्नित्रिणेत्रं
सदानन्दमीड प्रभुं पञ्चवक्त्रं ॥२॥
गिरीशं गणेशं गले नीलवर्णं
गवेन्द्राधिरूढं गुणातीतरूपं ।
भवं भास्वरं भस्मना भूषिताङ्गं
भवानीकलत्रं भजे पञ्चवक्त्रं ॥३॥
शिवाकान्त शम्भो शशाङ्कार्द्ध मौले
महेशान शूलिन् जटाजूटधारिन् ।
त्वमेको जगद्व्यापको विश्वरूप
प्रसीद प्रसीद प्रभो पूर्णरूप ॥४॥
परमात्मानमेकं जगद्बीजमाद्यं
निरीहं निराकारमोङ्कारवेद्यं ।
यतो जायते पाल्यते येन विश्वं
तमीशं भजे लीयते यत्र विश्वं ॥५॥
न भूमिर्नचापो न वह्निर्न वायुर्
न चाकाशमास्ते न तन्द्रा न निद्रा ।

न ग्रीष्मा न शीतं न देशो न वेशो
न यस्यास्ति मूर्त्तिस्त्रिमूर्त्तिं तमीडे ॥ ६ ॥
अजं शाश्वतं कारणं कारणानां
शिवं केवलं भासकं भासकानां ।
तुरीयं तमःपरमाद्यन्तहीनं
प्रपद्ये परं पावनं द्वैतहीनं ॥ ७ ॥
नमस्ते नमस्ते विभो विश्वमूर्त्ते
नमस्ते नमस्ते चिदानन्दमूर्त्ते ।
नमस्ते नमस्ते तपोयोगगम्य
नमस्ते नलस्ते श्रुतिज्ञानगम्य ॥ ८ ॥
प्रभो शूलपाने विभो विश्वनाथ
महादेव शम्भो महेश त्रिनेत्र ।
शिवाकान्त शान्त स्मरारे पुरारे
त्वदन्यो वरेण्यो न मान्यो न गण्यः ॥ ९ ॥
शम्भो महेश करुणामय शूलपाणे
गौरीपते पशुपते पशुपाशनाशिन् ।
काशीपते करुणया जगदेतदेकम्
त्वं हंसि पासि विदधासि महेश्वरोसि ॥ १० ॥
त्वत्तो जगद्भवति देव भव स्मरारे
त्वय्येव तिष्ठति जगन्मृड विश्वनाथ ।
त्वय्येव गच्छति लयं जगदेतदीश
लिङ्गात्मके हर चराचरविश्वरूपिन् ॥ ११ ॥ समाप्तम् ॥

# मुकुन्दमाला ।



वन्दे मुकुन्दमरविन्ददलायताक्षं
कुन्देन्दुशङ्खदशनं शिशुगोपवेशम् ।
इन्द्रादिदेवगणवन्दितपादपीठं
वृन्दावनालयमहं वसुदेवसूनुम् ॥१॥
श्रीवल्लभेति वरदेति दयापरेति
भक्तिप्रियेति भवलुण्ठनकोविदेति ।
नाथेति नागशयनेति जगन्निवासेति
आलापिनं प्रतिदिनं कुरु मां मुकुन्द ॥२॥
जयतु जयतु देवो देवकीनन्दनोयं
जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।
जयतु जयतु मेघश्यामलः कोमलाङ्गो
जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥३॥
मुकुन्द मूर्ध्ना प्रणिपत्य याचे
भवन्तमेकान्तमियन्तमर्थम् ।
अविस्मृतिस्त्वच्चरणारविन्दे
भवे भवे मेऽस्तु तव प्रसादात् ॥४॥
श्रीगोविन्दपदाम्भोजमधुनो महदद्भुतम् ।
यत्पायिनो न मुञ्चन्ति मुञ्चन्ति यदपायिनः ॥५॥

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः
कुम्भीपाकं गुरुमपि हरे नारकं नापनीतुम् ।
रम्या रामा मृदुतनुलता नन्दने नापि रन्तुं
भावे भावे हृदयभवने भावयेयं भवन्तम् ॥६॥
नास्था धर्मे न वसुनिचये नैव कामोपभोगे
यद्भाव्यं तद्भवतु भगवन् पूर्वकर्मानुरूपम् ।
एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेपि
त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥७॥
दिवि वा भुवि वा ममास्तु वासो
नरके वा नरकान्तक प्रकामम् ।
अवधीरितशारदारविन्दौ
चरणौ ते मरणे विचिन्तयामि ॥८॥
सरसिजनयने सशङ्खचक्रे
मुरभिदि मा विरमेह चित्त रन्तुम् ।
सुखतरमपरं न जातु जाने
हरिचरणस्मरणामृतेन तुल्यम् ॥९॥
मा भैर्मन्दमनो विचिन्त्य बहुधा यामीश्चिरं यातना
नैवामी प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं
लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥१०॥
भवजलधिगतानां द्वन्द्ववाताहतानां
सुतदुहितृकलत्रत्राणभारार्दितानाम् ।

विषमविषयतोये मज्जतामप्लवानां
भवति शरणमेको विष्णुपोतो नराणाम् ॥११॥
रजसि निपतितानां मोहजालावृतानां
जननमरणदोलादुर्गसंसर्गगानां।
शरणमशरणानामेक एवातुराणां
कुशलपथनियुक्तश्चक्रपाणिर्नराणाम् ॥१२॥
अपराधसहस्रसङ्कुलं पतितं भीमभवार्णवोदरे।
अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु॥१३॥
मा मे स्त्रीत्वं मा च मे स्यात् कुभावो
मा मूर्खत्वं मा कुदेशेषु जन्म।
मिथ्यादृष्टिर्मा च मे स्यात् कदाचित्
जातौ जातौ विष्णुभक्तो भवेयम् ॥१४॥
कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वानुसृतिस्वभावात्।
करोमि यद्यत् सकलं परस्मै
नारायणायैव समर्पयामि ॥१५॥
यत् कृतं यत् करिष्यामि तत्सर्वं न मया कृतम्।
त्वया कृतन्तु फलभुक् त्वमेव मधुसूदन ॥१६॥
भवजलधिमगाधं दुस्तरं निस्तरेयं
कथमहमिति चेतो मास्म गाः कातरत्वं।
सरसिजदृशि देवे तारकी भक्तिरेका
नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥१७॥

तृष्णातोये मदनपवनोद्भूतमोहोर्मिमाले
दारावर्त्ते तनयसहजग्राहसङ्घाकुले च ।
संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्
पादाम्भोजे वरद भवतो भक्तिभावे प्रसीद ॥१८॥
पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुः स्फुलिङ्गो लघुस्
तेजो निःश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः ।
क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुरा
दृष्टे यत्र सतारको विजयते श्रीपादधूलीकणः ॥१९॥
आम्नायाभ्यसनान्यरण्यरुदितं कृच्छ्रव्रतान्यन्वहं
मेदश्छेदपदानि पूर्त्तविधयः सर्व्वं हुतं भस्मनि ।
तीर्थानामवगाहनानि च गजस्नानं विना यत्पदं
द्वन्द्वाम्भोरुहसंस्तुतिं विजयते देवः स नारायणः ॥२०

आनन्द गोविन्द मुकुन्द राम
नारायणानन्त निरामयेति ।
वक्तुं समर्थोऽपि न वक्ति कश्चिद्
अहो जनानां व्यसनानि मोक्षे ॥२१॥
क्षीरसागरतरङ्गशीकरा
सारतारकितचारुमूर्त्तये ।
भोगिभोगशयनीयशायिने
माधवाय मधुविद्विषे नमः ॥२२॥

इति श्रीकुलशेखरेण राज्ञा विरचिता
मुकुन्दमाला समाप्ता ॥

गायन्तीनां गोपसीमन्तिनीनां
स्फीतकांचामचिरोलम्बमालाम् ।
निस्वाञ्चल्यालालसवक्तारविन्दे
कुर्वन्नव्याद्देवकीनन्दनो वः ॥ १ ॥
सुपर्णस्वर्णाद्रौ रचितमणिश्रृङ्गो जलधिजा
मुखाम्भोजे भृङ्गो निगमविलसत्पञ्जरशुकः ।
त्रिलोकीकस्तुरीतिलककमनीयो व्रजवधू
विहारी श्रीकृष्णो दिशतु भवतां शर्म सततं ॥ २ ॥
पास्त्वं बालवत्सानुजस्त्वमिह किं मन्मन्दिराशङ्कया
बुद्धं तन्नवनीतकुम्भविवरे हस्तं कथं न्यस्यसि ।
कर्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिताः
बाला वत्सगतिं विवेक्तुमिति संजल्पन् हरिःपातु वः ॥
तीर्णा तरिः सरिदतीवगभीरनीरा
बाला वयं सकलमित्यमनर्थहेतुः ।
निस्तारबीजमिदमेव कृशोदरीणां
माधवस्त्वमसि सम्प्रति कर्णधारः ॥ ४ ॥
श्रीकृष्णो जयति जगतां जन्मदाता च पाता
र्ता चान्ते हरति भजतां यश्च संसारभीतिम् ।

राधानाथः सजलजलदः श्यामलः पीतवासा
वृन्दारण्ये विहरति सदा सच्चिदानन्दरूपः ॥५॥
ज्योतिरूपं परमपुरुषं निर्गुणं नित्यमेकं
नित्यानन्दं निखिलजगतामीश्वरं वीश्वबीजम् ।
गोलोकेशं द्विभुजमुरलीधारिणं राधिकेशं
वन्दे वृन्दारकहरिहरब्रह्मवन्द्यांघ्रिपद्मम् ॥६॥
येषां श्रीमद्यशोदासुतपदकमले
नास्ति भक्तिर्नराणां ।
येषामाभीरकन्या प्रियगुणकथने
नानुरक्ता रसज्ञा ॥
येषां श्रीकृष्णलीलाललितगुणकथा
सादरौ नैव कर्णौ ।
धिक् तान् धिक् तान् धिगेतान् कथयति नितरां
कीर्त्तनस्थो मृदङ्गः ॥७॥
केचिद्वदन्ति धनहीनजनो जघन्यः
केचिद्वदन्ति गुणहीनजनो जघन्यः ।
व्यासो वदत्यखिलवेदविशेषविज्ञो
नारायणस्मरणहीनजनो जघन्यः ॥८॥
वृन्दावने वृक्षलताप्रतानैर्
वृन्दावनेशस्य विहारहेतोः ।
पुरा विधात्रा रचितान् सुकुञ्जान्
जगाम कृष्णः सह राधया सः ॥९॥

नवीनमेघोपमनीलदेहः
सुपीतपट्टाम्बरयग्मधारी।
स्मिताननः कुण्डलवान् किरीटी
वंशीधरो मालतीमालाधारी ॥१०॥
नवीननीलाम्बुदकान्तिमद्वपुः
सस्मेरवक्त्राम्बुजवेणुवादनः।
अनेकरत्नाभरणैर् विभूषितः
समुन्दराङ्गो महसा माहोज्ज्वलः ॥११॥
गोपीजनानन्दकारोमुरारिर्
वृन्दावनेन्द्रो वनमाल्यशोभी।
वंशीनिनादेन व्रजाङ्गणानां
मनांसि सम्मोहितवान् स कामी ॥१२॥
नाशाय बालकगणान् सहि कंसराजः
तां पूतनां मानुषराक्षसीञ्च।
संप्रेषयामास यदा तदा तां
मायाशिशुः प्राणसमं शुशोष ॥१३॥
जिघांसया समायान्तीं पूतनां राक्षसीवरां
क्रोडे कृत्वा स्तन्यदात्रीं जघान बालको हरिः ॥१४॥
गोपीगणो यमिह कामदृशा भजन्ते
यं भक्तिभाज इह केवलभक्तिभावैः।
यं योगिनो हृदि धिया परिचिन्तयन्ति
तं केवलं कमललोचनमाश्रयेहं ॥१५॥

कृष्णे कारुण्यपूर्णे मधुमधुरवदने पीतकौषेयवस्त्रे
रत्नालङ्कारभूषे सजलजलधरश्यामले सुन्दराङ्गे ।
वंशीवाद्यप्रमोदे व्रजजनयुवती जीवने यादवेन्द्रे
भूयाभक्तिर्दृढा मे सकलसुरवरैः सेव्यमाने मुरारौ ॥१६॥

वृन्दारण्ये विहरति सदा वासुदेवो दयालुर्
गोपस्त्रीभिः स्मरशरशतैर्भिन्नहृत् कामुकीभिः ।
गोपैर्बालैरपि सहचरैः सार्द्धमानन्दयुक्तैर्
योऽसौ कृष्णः परमकरुणस्तं सदा चिन्तयेऽहम् ॥१७॥

वृन्दावनस्थानविहारहेतो
राधासमं कुञ्जगृहप्रवेशम् ।
चकार गोपीजनवल्लभोऽसौ
पायादपायादपि मां मुरारिः ॥१८॥

वने वने कुञ्जवने मुरारिर्
भ्रमन् भ्रमन् भ्राजति राधिका च ।
सहैव कुञ्जे रमते च राधया
पायादपायादिह कृष्ण एकः ॥ १९ ॥

अनन्त विश्वम्भर वासुदेव
समस्तदेवैरपि वन्द्यपाद ।
निरामय त्राणपते मुरारे
हरे हराशेषमहाघसङ्घम ॥२०॥

इति श्रीधरस्वामिना विरचितं
व्रजविहारकाव्यं समाप्तम् ॥

## गुणरत्नम् ।



सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसङ्कोचभाजि
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणेर्
वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥१॥

यत्कण्ठे गरलं विराजति सदा मौलौ च मन्दाकिनी
यस्याङ्के गिरिजाननं कटितटे शार्दूलचर्माम्बरम् ।
यन्मायाहि करोति विश्वमखिलं पायात् स वः शङ्करः
जम्बुवत् जलबिन्दुवत् जलजवत् जम्बालवत् जालवत् ॥२

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःशुभकरी विद्या गुरूणां गुरुः
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः ॥

गुणी गुणं वेत्ति न वेत्ति निर्गुणो
बली बलं वेत्ति न वेत्ति निर्बलः ।
पिको वसन्तस्य गुणं न वायसः
करी च सिंहस्य बलं न मूषिकः ॥४॥

गुणा गुणज्ञेषु गुणा भवन्ति
ते निर्गुणं प्राप्य भवन्ति दोषाः ।

सुस्वादुतोयाः प्रभवन्ति नद्यः
समुद्रमासाद्य भवन्त्यपेयाः ॥ ५ ॥

गुणायन्ते दोषाः सुजनवदने दुर्ज्जनमुखे
गुणा दोषायन्ते किमिति जगतां विस्मयपदम् ।
यथा जीमूतोयं लवणजलधेर्वारि मधुरं
फणी पीत्वा चीरं वमति गरलं दुःसहतरम् ॥ ६ ॥

विद्या विवादाय धनं मदाय
शक्तिः परेषां परिपीडनाय :
खलस्य साधोर्विपरीतमेतत्
ज्ञानाय दानाय च रक्षणाय ॥ ७ ॥

मतिरेव बलाद् गरीयसी तदभावे करिणामियन्दशा
इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन्

वरं गर्भस्रावो वरमपि च नैवाभिगमनं
वरं जातप्रेतो वरमपि च कन्याभिजननम् ।
वरं बन्ध्या भार्य्या वरमपि च गर्भेषु वसतिर्
न चाविद्वान् रूपद्रविणगुणयुक्तोपि तनयः ॥ ८ ॥

या राका शशिशोभना गतघना सा यामिनी यामिनी
या सौन्दर्य्यगुणान्विता पतिरता साकामिनीकामिनी
या गोविन्दरसप्रमोदमधुरा सा माधुरी माधुरी
या लोकद्वयसाधनी तनुभृतां सा चातुरी चातुरी ॥ १० ॥

ज्ञातिभिर्वंण्यते नैव चोरेणापि न नीयते ।
दाने नैव क्षयं याति विद्यारत्नं महाधनम् ॥ ११ ॥

अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।
गृहीतइव केशेषु मृत्युना धर्ममाचरेत् ॥१२॥
गुणेन स्पृहनीयः स्यात् न रूपेण यतो जनः ।
सौगन्ध्यवर्ज्यं नादेयं पुष्पं कान्तमपि क्वचित् ॥१३॥
इति श्रीमहाकविभवभूतिविरचितं गुणरत्नं समाप्तम्।

## नीतिप्रदीपः ।

रत्नाकरः किं कुरुते स्वरत्नैर्
विन्ध्याचलः किं करिभिः करोति ।
श्रीखण्डखण्डैर्मलयाचलः किं
परोपकाराय सतां विभूतिः ॥१॥
कर्णविघातैरपि ताड्यमाना
दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥२॥
येनाकारि मृणालपत्रमशनं क्रीडा करिण्या सह
स्वच्छन्दं भ्रमणञ्च कन्दरगणे पीतं पयो निर्झरम् ।
सोऽयं वन्यकरी नरेषु पतितः पुष्णाति देहं तृणैर्
यद्दैवेन ललाटपत्रलिखितं तत्प्रोज्झितुं कः क्षमः ॥३॥
शशिदिवाकरयोर्ग्रहपीडनं गजभुजङ्गमयोरपिबन्धनं।
मतिमताञ्चविलोक्यदरिद्रतां विधिरहो बलवान् इति
मेमतिः॥

व्योम्नेऽकान्तविहारिणोऽपि विहगाः सम्प्राप्नुवन्त्यापदं
वध्यन्ते निपुणैरगाधसलिलात् मत्स्याः समुद्रादपि ।
दुर्नीते हि विधौ किमस्ति चरितं कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥५॥
अपि दलन्मुकुले बकुले यया
पदमधायि कदापि न तृष्णया ।
अहह सा सहसा विधुरे विधौ
मधुकरी बदरीमनुवर्त्तते ॥ ६ ॥
गतोऽस्मि तीरं जलधेः पिपासया
स चापि शुष्कश्चुलुकी कृतो मया
न दृश्यते दोषलवोऽपि तोयधेर्
ममैव तत्कर्मफलं विजृम्भते ॥ ७ ॥
सिंहक्षुण्णकरीन्द्रकुम्भगलितं रक्ताक्तमुक्ताफलं
कान्तारे बदरीधिया द्रुतमगात् भिल्लस्य पत्नी मुदा ।
पाणिभ्यामवगृह्य शुक्लकठिनं तद्वीक्ष्य दूरे जहौ
अस्थाने पततामतीव महतामेतादृशी स्याद्गतिः ॥८॥
किन्ते नम्रतया किमुन्नततया किन्ते घनच्छायया
किन्ते पल्लवलीलया किमनया चाशोक पुष्पश्रिया ।
यत्त्वन्मूलनिषण्णखिन्नपथिकस्तोमः स्तुवन्नन्वयं
न स्वादूनि मृदूनि खादति फलान्युत्कण्ठमुत्कण्ठितं॥
दूरे मार्गान्निवससि पुनः कण्टकैरावृतोऽसि
छायाशून्यः फलमपि च ते वानरैरप्यभक्ष्यम् ।

निर्गन्धस्त्वं मधुपरहितः शाल्मले सारशून्यः
सेवास्माकं भवति विफला तिष्ठ निम्बस्य यामः ॥१०॥

हंसाः पद्मवनाशया मधुलिहः शौरभ्यलाभाशया
पान्थाः स्वादुफलाशया वलिभुजो गृध्राश्च मांसाशया ।
दूरादुन्नतपुष्परागनिकरैर्निःसारमिथ्योन्नतै
रेरे शाल्मलिपादप प्रतिदिनं केन त्वमावञ्चितः॥११॥

किन्तेन हेमगिरिणा रजताद्रिणा वा
यत्र स्थिताहि तरवस्तरवस्तएव ।
वन्दामहे मलयमेव यदाश्रयेण
शाकोटनिम्बकुटजान्यपि चन्दनानि ॥१२॥

निर्वाणदीपे किमुतैलदानं चौरेगते वा किमुसावधानं।
वयोगते किं वनिताविलासःपयोगतेकिं खलु सेतुबन्ध१३

शीतेतीते वसनमशनं वासरान्ते निशान्ते
क्रीडारम्भः कुवलयदृशां यौवनान्ते विवाहः ।
सेतोर्बन्धः पयसि गलिते प्रस्थिते लग्नचिन्ता
सर्वञ्चैतद्भवति विफलं स्वस्वकाले व्यतीते ॥१४॥

नवं वस्त्रं नवच्छत्रं नव्या स्त्री नूतनं गृहम् ।
सर्वत्र नूतनं शस्तं सेवकान्ने पुरातने ॥१५॥

समायाति यदा लक्ष्मीर् नारिकेलफलाम्बुवत् ।
विनिर्याति यदा लक्ष्मीर् गजभुक्तकपित्थवत् ॥१६॥

इति श्रीमहाकविवेतालभट्टविरचितं
नीतिप्रदीपकाव्यं समाप्तम् ॥



नत्वा तां परमेश्वरीं शिवकरीं श्रीभारतीं भास्वतीं
गङ्गातीरनिवासिना सुकविना लोकोपकारार्थिना ।
नानापण्डितवक्त्रनिर्गतवता निर्मीयते केनचित्
पद्यानामिह संग्रहोऽमृतकथाप्रस्तावविस्तारिणाम् ॥१॥
काव्ये भव्यतमेपि विज्ञनिवहैरास्वाद्यमाने मुहुः
दोषान्वेषणमेव मत्सरयुषां नैसर्गिको दुर्ग्रहः ।
कासारेपि विकाशिपङ्कजचये खेलन्मराले पुनः
क्रौञ्चश्चञ्चुपुटेन कुञ्चितवपुः सम्बूकमन्वेषते ॥२॥
अतिरमणीये काव्येऽपि पिशुनो दूषणमन्वेषयति ।
अतिरमणीये वपुषि व्रणमिव मक्षिकानिकरः ॥३॥
कीर्त्तिः स्वर्गतरङ्गिणीभिरभितो वैकुण्ठमाप्लावितं
क्षौणीनाथ तव प्रतापतपनैः सन्तापितः क्षीरधिः ।
इत्येवं दयितायुगेन हरिणा त्वं याचितः स्वाश्रयं
हृत्पद्मं हरये श्रिये स्वभवनं कण्ठं गिरे दत्तवान् ॥४
रवेः कवेः किं समरस्य सारं
कृषेर्भयं किं किमदन्ति भृङ्गाः ।
सदा भयं ब्रह्मपदञ्च केषां
भागीरथीतीरसमाश्रितानाम् ॥५॥

वासः कांचनपिञ्जरे नृपकराम्भोजैस्तनुमार्ज्जनं
भक्ष्यं स्वादुरसालदाडिमफलं पेयं सुधाभं पयः ।
पाठः संसदि रामनाम सततं धीरस्य कीरस्य मे
हाहा हन्त तथापि जन्मविटपिक्रोडं मनो धावति॥ ६॥

उदयति यदि भानुः पश्चिमे दिग्विभागे
विकसति यदि पद्मः पर्व्वतानां शिखाग्रे ।
प्रचलति यदि मेरुः शीततां याति वह्निर्
न चलति खलु वाक्यं सज्जनानां कदाचित् ॥७॥

निर्वाणदीपे किमु तैलदानं
चौरे गते वा किमु सावधानम् ।
वयोगते किं वनिताविलासः
पयोगते किं खलु सेतुबन्धः ॥८॥

वरमसिधारा तरुतलवासो
वरमिह भिक्षा वरमुपवासः ॥
वरमपि घोरे नरके पतनं
नच धनगर्व्वितबान्धवशरणं ॥९॥

कुग्रामवासः कुजनस्य सेवा
कुभोजनं क्रोधमुखी च भार्य्या
मूर्खश्च पुत्रो विधवा च कन्या
विनाग्निना संदहते शरीरम् ॥ १० ॥

वरं मौनं कार्य्यं नच वचनमुक्तं यदनृतं
वरं क्लैव्यं पुंसां नच परकलत्राभिगमनम्

वरं मैत्र्याभिख्यं नच परधनास्वादनसुखं
वरं प्राणत्यागो नच पिशुनवादेष्वभिरतिः ॥११॥
निःस्वो वष्टि शतं शतो दशशतं लक्षं सहस्राधिपः
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेश्वरत्वं पुनः
चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्राह्मं पदं वांछति
ब्रह्मा विष्णुपदं हरिः शिवपदं त्वाशावधिं केगताः॥१२
ख्यातः शक्रोभगाङ्गोविधुरपि मलिनोमाधवोगोपजातो
वेश्यापुत्रो वशिष्ठः सकजपदयमः सर्व्वभक्ष्यो हुताशः।
व्यासो मत्स्योदरीयः सलवणःउदधिःपाण्डवा जारजा
रुद्रः प्रेतास्थिधारी त्रिभुवनवसतां कस्य दोषोनजात
तुरगशतसहस्रं गोगजानांच लक्षं
कनकरजतपात्रं मेदिनीं सागरान्ताम् ।
विमलकुलवधूनां कोटिकन्याश्च दद्यात्
नहि नहि सममेतैरन्नदानं प्रधानम् ॥१४॥
कालिदासकविता नवं वयः माहिषं दधि सशर्करं पय
एनमांसमबला च कोमला संभवन्तु मम जन्मजन्मनि॥:
नाक्षराणि पठता किमपाठि [॥१५॥]
पाठितोपि किमु विस्मृतएव ।
इत्यमर्थिजनसंशयदोला
खेलनां खलु चकार नकारः ॥ १६ ॥

लक्ष्मणसेन उवाच ।

शैत्यनाम गुणस्तवैव त्वदनु स्वाभाविको स्वच्छता

किं ब्रूमः शुचितां भवन्त्यशुचयः स्पर्शेन यस्याः परे ।
किञ्चातः परमं तव स्तुतिपदं त्वं जीवनं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥१७॥

बल्लालउवाच ।

तापो नापगतस्तृषा नच कृशा धौता न धूली तनोर्
न स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा ।
दूरोत्क्षिप्तकरेण हन्त करिणा स्पृष्टा नवा पद्मिनी
प्रारब्धो मधुपैरकारणमहो झङ्कारकोलाहलः ॥१८॥

तत्पुत्रउवाच ।

परीवादस्तथ्यो भवति वितथो वापि महताम्
अतथ्यस्तथ्यो वा हरति महिमानं जनरवः ।
तुलोत्तीर्णस्यापि प्रकटितहताशेषतमसो
रवेस्तादृक्तेजो नहि भवति कन्यां गतवतः ॥१९॥

राजोवाच ॥

सुधांशोर्जातेयं कथमपि कलङ्कस्य कणिका
विधातुर्दोषोऽयं नच गुणनिधेस्तस्य किमपि ।
स किं नात्रेः पुत्रो न किमु हरचूडार्चनमणिर्
[illegible]ध्वान्तं जगदुपरि किं वा न वसति ॥२०॥
[illegible]कृतः पद्यसंग्रहः समाप्तः ॥

# विज्ञापनम् ।

## कलिकाता राजधान्यां श्रीयुतबाबुभुवनचन्द्रवसाकसंस्थापित संवादज्ञानरत्नाकराख्ययन्त्रे देवनागराक्षरे तद्द्वारैव नूतनमुद्रितपुस्तक विवरणम् ।

[ निमतला घाट ष्ट्रीट ८ संख्यक भवन ]

### संस्कृतम् ।

#### काव्यशास्त्र ।

शिशुपालवध... सटीक ... ४)
मेघदूत " ... ।=)
रघुवंश " ... ... १।)
कुमारसम्भव " ... ।=)
नलोदयः " ... ।=)
ऋतुसंहारः " ... ।-)
शृङ्गारतिलक " ... =)
किरातार्ज्जुनीय " ... २।।)
भामिनीविलास मूलमात्र ... ।)
रत्नपञ्चकम् "... ... -)
उत्तरकुमारसम्भव "... ... ।)
किरातार्ज्जुनीय "... ... ।)
चाणक्यश्लोक "... .. -)
सूर्य्यशतक "... ... -)
विद्वन्मोदतरङ्गिणी"... ... ।)
काव्यसंग्रहप्रथमखण्ड"... ...१)
English translation of Meghaduta ... ... ... 8 anas.

#### वैद्यशास्त्र ।

चक्रदत्तः ... ... २)
चरक ... १मखण्ड... १।। )
" ... २य " ... ।। )
" ... ३य" ... ।। )
" ... ४र्थ" ... ।। )
शार्ङ्गधर सम्पूर्ण ... १)
वाभट सूत्रस्थान ... १)
माधवनिदानप्रथमखण्ड... १ )

#### वेदान्त ।

विवेकचूड़ामणिः ... ।)
श्रीमद्भगवद्गीतासटीक ... ६)
शाङ्करभाष्य श्रो आनन्दगिरि कृत टीकासहित
उपनिषत् ईश ... ... =)
" केन ... ... =)
" कठ ... ... ।)
" प्रश्न ... ... ।=)
" मुण्ड ... ... ।-)
" माण्डुक्य ... ।।)
मुक्तिकोपनिषत् ... ... =)

#### धर्म्मशास्त्र ।

सप्तश्लोकी गीता ... ... )५
नवग्रहस्तोत्र ... ... ... )५
...स्यकर्म्मपद्धति ... ... =)

छन्दशास्त्र।

छन्दमञ्जरी ... ।)

पिङ्गल १म खण्ड ... ... ॥)

२य खण्ड ... ...॥)

नाटक।

वेणीसंहारः सटीक ... ।॥)

शकुन्तला सटीक ... ...।॥)

मुद्राराक्षस...१म खण्ड......॥)

" ...२य "... ...।)

मालविकाग्निमित्र ... ...॥)

वसन्ततिलकभाणः ... ...।)

विक्रमोर्वशी ... ... ...।॥)

कोष।

हारावलि ... ... ... =)

अमर ... ... ... ॥)

मेदिनी ... १)

Sanskrit and English Dictionary by H. H. Wilson.

Part I. price ... ... 8 Ans.

Part II " ... ... ... 8 "

Part III. " ... ... ... 8 "

प्रहसन।

हास्यार्णवः ... ... ... ।)

दर्शन।

सर्वदर्शनसंग्रह ... ... १)

ज्योतिष।

सूर्यसिद्धान्तःसटीक......१।)

व्याकरण।

मुग्धबोध ... ... ... ॥)

न्याय।

सिद्धान्तमुक्तावलि सहित भाषा-परिच्छेद ... ... ।=)

शब्दशक्तिप्रकाशिका ... ...१)

कुसुमाञ्जलि ... ... ।)

साहित्य।

दशकुमारचरित १म खण्ड ...।)

" २य " ॥)

वर्णपरिचय १म भागः ...... –)

हितोपदेश ... ... ... ॥)

हिन्दी।

पाण्डवगीता मूल सहित ...।)

वैतालपच्चिसी ... ... ।॥)

नजीरकी सैर ... ... ।)

माधवविलास ... ... ।)

इन्द्रजाल ... ... ... ।॥)

रामकृष्ण वारमासी ... ... –)

श्रीरामचरितमाहात्म्य ... –)

श्रीरामचालिसा ... ... –)

...ई॥

...ाच।

...ाभाविकी स्वच्छता